THE

# HARIDAS SANSKRIT SERIES

## 79



# NYASAKALPALATA

OR

## PĀṆĪNIYA SŪTRA NYĀSA S'ĀSTRĀRTHA

*Edited with Introduction etc.,*

BY

S'UKLA S'RI RĀJA NĀRĀYANA S'ĀSTRY



PUBLISHED BY

JAYA KRISHNA DÂS HARIDÂS GUPTA

*The Choukhambâ Sanskrit Series Office.*

Benares City.

1938



हरिदास-संस्कृत-ग्रन्थमाला

७९

॥ श्रीः ॥

# न्यासकल्पलता

अर्थात्

## [ पाणिनीयसूत्रन्यासशास्त्रार्थः ]

जौनपुरमण्डलान्तर्गतोऽयपुरगोल्हवाबदलापुराभिजनव्युत्पत्तिवादशास्त्रार्थकला-
परिभाषेन्दुशेखरशास्त्रार्थकलादिविंशत्यधिकग्रन्थप्रणेतृ-लब्धशास्त्रार्था-
प्रतिमप्रतिष्ठ-सर्वतन्त्रस्वतन्त्र-संस्कृताशुकवि-पण्डितराज-
शुक्लश्रीवेणीमाधवशास्त्रिणाम्
आत्मजेन नैयायिकेन
शुक्लश्रीराजनारायणशास्त्रिणा
सङ्कलिता संशोध्य सम्पादिता च ।

प्रकाशकः—
जयकृष्णदास-हरिदास गुप्तः-
चौखम्बा संस्कृत सीरिज़ आफिस,
बनारस सिटी ।

१९९५

महानुभावा इमे न्यासकल्पलताकृतान्तातचरणा व्युत्पत्तिवाद-

शास्त्रार्थकलाप्रभृति-विंशत्यधिकग्रन्थप्रणेतारः

शास्त्रार्थधुरन्धराः पण्डितराजाः—



**शुक्लाः श्रीवेणीमाधवशास्त्रिणः**

V. V. P.

# समपर्णम्

श्रीमतान्तत्रभवताम्भवतां विश्वविख्यातशास्त्रार्थधुरन्धराणां शक्तिवादशास्त्रार्थकलाप्रभृतिविंशत्यधिकग्रन्थप्रणेतॄणाम्पण्डितराजाद्यनेकोपाधिविभूषितानां शुक्लश्रीवेणीमाधवशास्त्रिणाम्पुत्रेष्वन्यतमोऽतिप्रियः श्रीराजनारायणः श्रीमद्भ्योऽधीत्य शब्दशास्त्रं स्वीयलघुधिया विरच्य न्यासकल्पलताम्पूज्यसेवासु निम्नपद्यैरुपस्थापयन् सन्तुष्यति—

शाब्दं च मेऽतिविषमं सरलायितं यै,
बाल्येऽपि मन्दमतये स्ववचोभिरेव ।
शास्त्रार्थिविश्वपरिवर्णितकीर्त्तिभाजः,
पूज्या जयन्तु जनका मम पण्डितेन्द्राः ॥ १ ॥

हे पण्डितेश भवतः कृपया यदत्र,
लब्धन्तदेव विनिवेशितमित्यवेहि ।
श्रद्धाञ्जलिम्प्रददतो नहि किञ्चिदस्ति,
भावत्कमेव भवते परिकल्पयामि ॥ २ ॥

यद्यप्यहं कुटिलधीरपराधशीलो,
बालोऽस्म्यतो नच बिभेमि तवाप्रसादात् ।
क्षान्तौ तथापि भवतामधिकारिताऽस्ति,
चेतःप्रशाम्यति यतो मम सापराधम् ॥ ३ ॥

भवताम्बिबनिबन्ध्याहं न्यासकल्पलतासुमम् ।
करारविन्दयोर्दत्त्वा प्रसादायाभिलाषुकः ॥ १ ॥

# विज्ञप्तिविशेषः ।

अये श्रद्धेयचरणास्सुरभारतीसमाराधनाल्लब्धवैदुष्यभाजः पण्डितनिवहाश्शास्त्रार्थकलासम्पादनासञ्जितनितान्तस्वान्ताः प्रेयांसोऽध्ययनशीलाश्शास्त्रार्थरुचयो बन्धवश्च !

नैतदस्त्यविदितं श्रीमतां यद् व्याकरणमहाभाष्ये व्याकरणाध्ययनप्रयोजनवर्णनदशायां भगवताऽशेषयशसा भाष्यकृता "रक्षोहागमलघ्वसन्देहाः प्रयोजनम्" वर्णयता ऊहार्थमध्ययनं शब्दशास्त्रस्य लघ्वर्थञ्चेत्यादि यथोचितं स्पष्टीकृतम् ।

तत्र ऊहशब्दे ऊह वितर्के इति धातुःवितर्कश्च प्रयोक्तुस्सम्भावनात्मकं ज्ञानम् । एवञ्च तर्कस्यैव प्राधान्यमिहाप्यादृतम्भवति । पाणिनीयञ्च शास्त्रं सूत्रवार्त्तिकभाष्यमूलकम् । अत एव "शब्दशास्त्रे पाणिनीये सूत्रवार्त्तिकभाष्याणान्त्रयाणामेव प्रामाण्यम्" इति प्राचोक्तं सङ्गच्छते । तत्र एतादृशगुरुभूतसूत्रापेक्षया निर्दुष्टो लघुभूत एव न्यासःकुतो न कृतःपाणिनिना, एतत्सूत्राभावेऽपि निर्वाहे किमर्थमयमारम्भः, निष्फलमेवैतत् प्रतिभाति वार्तिकम् तदन्तरेणापि सिद्धेरप्रत्यूहत्वात्' इत्येवं विधाः एव तर्काः कर्त्तुम्पार्यन्ते ।

नच "वर्णेनाप्यनर्थकेन न भवितव्यं किम्पुनरियता सूत्रेण, किञ्चिद् दृष्टार्थवत् किञ्चिददृष्टार्थवत् सर्वथाऽनर्थकञ्च किञ्चिदिति" भाष्यसिद्धान्तेन पारायणादावदृष्टहान्यापत्तेरेव पूर्वोक्तप्रकारकतर्काणामनुदयेन कुतो न्यासशास्त्रार्थावतार इति वाच्यम् ? तथापि "अर्द्धमात्रालाघवेन पुत्रोत्सवम्मन्यन्ते वैयाकरणाः" इत्यावश्यकसिद्धान्तमवलम्ब्य लघुभूतोपायस्य सम्भवे महावैयाकरणस्य पाणिनेर्गौरवादरे किन्तात्पर्यमिति विचार्यताम् इति बुद्धिवैशद्यकारकतर्काणां समुदये क्षतिविरहात् । सिद्धान्तपदार्थोऽपि तर्कद्वारा वादिप्रतिवादिभ्यां निर्णीतोऽर्थ एव ।

एवमपि पाणिनीये शब्दशास्त्रे प्रक्रियापरिष्कारशास्त्रार्थभेदात् शास्त्रार्थस्यापि तर्कसम्पन्नस्य द्वैविध्यम् । तत्र प्रक्रियाशास्त्रार्थ एव न्यासशास्त्रार्थोऽन्तर्भवतीति नो नवीनप्रकारः ।

इयञ्च शास्त्रार्थसरणिर्महद्भिर्देशमान्यैः पण्डितप्रकाण्डैश्शास्त्रार्थरसिकैर्दैशिकैः राजभिश्च सादरं सबहुमानञ्च समुपासिता । तत्रापि परिष्कारापेक्षया न्यासशास्त्रार्थस्य सुज्ञेयत्वात् महीयान् प्रचारोऽनुभूयते ।

अद्यापि पण्डितसमाजे 'अयम् पण्डितमण्डलमौलिभूतानाम्भारतमार्त्तण्डमहामहोपाध्यायादिपदवीभृतां "न भूतो न भविष्यति" इति प्रवादं साधु चरितार्थयतां साक्षाच्छिवकुमारावताराणां शास्त्रार्थसृष्टिविष्णुतां गतवतां श्रीशिवकुमारमिश्रशास्त्रिणाम् विचित्रो न्यासः, प्रातःस्मर्त्तव्यचरणानाम्प्रसिद्धशास्त्रार्थदिग्गजानान्द्वितीयशिवकुमारत्वमापन्नानाम्महामहोपाध्यायादिपदवीभृताम्मिथिलामण्डलप्रधानविदुषां श्री जयदेवमिश्रशास्त्रिणां कृतिविषयोऽभिनवो न्यास' इति श्रूयते ।

एवञ्च शास्त्रार्थसृष्टिं स्थिरीकर्त्तुकामैः कतिपयैर्महापण्डितैर्बहु परिश्रम्य न्यासकौमुदी, न्यासरत्नावली, न्याससुधा, पाणिनिवादरत्नादयो ग्रन्थाः प्रवर्त्तिताः । परन्तेषु केषाञ्चिदल्पन्यासप्रतिपादकत्वात्, केषाञ्चित् न्यासपरिष्कारोभयप्रतिपादकत्वेन गुरुतरतया साधारणैर्दुर्ज्ञेयत्वात्, केषाञ्चिच्च बहुमूल्यत्वेन साधारणैरसंग्राह्यत्वादेतस्या न्यासकल्पलताया अवतारः ।

अत्र प्रायः सम्प्रदायप्रचलितानां यावदुपलब्धानां समेषां न्यासानां सङ्कलनमपि विराजते इति लघुतर उपायो विज्ञैरवश्यन्द्रष्टव्यः । स्वल्पज्ञानवता मया त्रुटितमप्यत्र भवद्भिस्तत्त्वज्ञैर्विपश्चितामग्रेसरैः क्षन्तव्यमेव स्यादिति विश्वसिमि ।

आशासे चायमकिञ्चित्करोऽपि प्रयासः प्रज्ञावताम्प्रमोदाय भविष्यतीति ।

आ० शु० १० विजया १९९५ वै०
ग० स० कालेज ( काशी )

भवदीयस्य—
**श्रीराजनारायणशुक्लस्य**

# न्यासकल्पलताव्याख्यातसूत्राणां सूची

॥ इति ॥

* श्रीः *

# न्यासकल्पलता।

## मङ्गलम्।

श्रीमद्विन्ध्यगिरीश्वरीम्मुनिवराराध्याङ्घ्रिपद्मद्वयीम्,
मानस्वान्तविकासिनीमहरहोरक्षोगणध्वंसिनीम्।
मायामोहमहाघमर्दनमतिन्नत्वाऽऽरभे सद्गुरून्
पित्रोः पादचतुष्टयीञ्च शुभदां श्रीराजनारायणः॥ १॥

न्यासग्रन्थाः सुसंस्कृत्य पणिनीयेऽपिभूरिशः।
प्रकाशिता बुधवरैर्वीक्ष्यन्ते च महोदयैः॥ २॥

तत्र नालोक्य विदुषां छात्राणाञ्च मनोमुदम्।
सङ्क्षिप्तसारबहुलान्न्यासकल्पलतामहम्॥ ३॥

क्वचिदत्र नवीनानान्न्यासानाम्भूरि सर्जनम्।
क्वचित्प्रकाशितानां सन्न्यासानां सर्वसङ्ग्रहः॥ ४॥

आशासे सज्जनानां स्याद् हृदि सन्तोषदायिनी।
न्यासशास्त्रार्थरसिकानाम्मानसविहारिणी॥ ५॥

## हलन्त्यम्—

ननु "हलन्त्यम् उपदेशेऽजनुनासिक इत्" इत्यनयोः स्थाने "उपदेशे इदन्त्यम्" इत्येव न्यासोऽस्तु उपदेशेऽन्त्यमित्संज्ञकम्भवतीत्यर्थः। एवञ्च नान्योन्याश्रयचक्रकादिदोषलेशोऽपि।

नच एवम् अनङादौ नकारोत्तरवर्त्यकारस्येत्त्वन्न स्यात्तस्योपदेशकालेऽनन्त्यत्वान्ङकारस्यैवान्त्यत्वादिति वाच्यम्? तदर्थम् "अच्" इतिपृथग्योगस्यारब्धव्यत्वात्। तदर्थस्तु अनन्त्योऽप्यच् (क्वचिदिष्टस्थले) इत्संज्ञको भवति।

नच भू सत्तायाम् इत्यादौ अकारोत्तरोकारस्यापीत्त्वम्प्रसज्ज्येतेति वाच्यम्? तद्वारणाय "अनुनासिकः" इति पृथग्योगारम्भात्। तदर्थस्तु अच्चेदिद् भवति

तर्ह्यनुनासिक एव । कुत्रानुनासिकत्वमिति जिज्ञासा तु "प्रतिज्ञानुनासिक्याः पाणिनीयाः" इति मूलोत्तरेणैव विनिवर्त्तनीया ।

नन्वेवं अनुनासिकश्चेदिद् भवति तर्हि अजेवेति विपरीतनियमस्यापि सम्भवे नुमादीनाम्मकारादेरपीत्त्वानापत्तिरिति चेन्न ? "मिदचोऽन्त्यात् परः" इत्यादिसूत्रारम्भसामर्थ्यादेव तत्प्रतिबन्धात् ।

नच सूत्रभेदात् पारायणादावदृष्टहानिसम्भवः ? सूत्रभेदन्तमुपाचरन्ति इत्यादिभाष्ये "अच उपसर्गात्त"इति सूत्रे तत्स्वीकारात् । एवञ्च "उपदेशे इदन्त्यम् , अच् , अनुनासिकः" इतिन्यासेनैव सर्वार्थसिद्धौ चक्रकादिदोषोद्धारेण "हलन्त्यमि"तिसूत्रस्यावृत्तिर्मुधैवेति चेन्न ? मात्रालाघवसत्त्वेऽपि ज्ञानगौरवस्य भाष्योक्तस्याव्याहतत्वात् ।

## हल्—

ननु "अइउण्" इत्यादिचतुर्दशसूत्र्यां "हल्" इत्यस्य पाठो मास्तु, त्रयोदशैव सूत्राणि, प्रागभीष्टान् लकारान्तान् सर्वानपि प्रत्याहारान् "शषसहर्" इतिसूत्रान्तरेफान्तान् स्वीकृत्यापि निर्वाहसम्भवात् । यथा"हलन्त्यम्" इत्यस्यावृत्तिरभीष्टा तथैव "हरन्त्यम्" इति विन्यस्यापि स्वज्ञप्त्यधीनज्ञप्तिकत्वरूपान्योन्याश्रयस्य शक्यपरिहारत्वात् । हर्पदस्य हकारादिरान्तसमुदायलक्षकत्वाद् वा इति चेन्न ? तथा सति क्सविधायके "शल इगुपधादनिटः" इत्यत्र शर इति पठने हकारस्य शरन्तर्गतत्वाभावेन अलिक्षदित्यत्र तदनापत्तेः । पूर्वन्तु "हकारो द्विरुपात्तोऽयमटि शल्यपि वाञ्छता । अर्हेणाधुक्षदित्यत्र द्वयं सिद्धम्भवेद् यथा" इति न दोषः ।

नच तथापि "शषसहर्" पठित्वा हकारं शरन्तमङ्गीकृत्य न दोष इति वाच्यम् ? हकारस्य खर्प्रत्याहारघटकत्वापत्त्या हरिर्हरतीत्यादौ "खरवसानयोः" इति रेफस्य विसर्गापत्तेः । नच "प्रेष्यब्रुवोर्हविष" इति निर्देशेन हकारे परे विसर्गाभावकल्पनान्न दोष इति वाच्यम् ? तथा सति प्राङ् हरतीत्यादौ "ङ्णोःकुक्टुक्" इति कुगापत्तेः । नचेष्टापत्तिः ? रूपद्वयापत्तेः ।

नच "एङ्ह्रस्वात्" इति निर्देशेन हकारे परे कुगभावः कल्पनीयः ? तथा वारणेऽपि मद्रह्रद इत्यादौ "अचो रहाभ्याम्" इति हकारस्य द्वित्वापत्तेः । एवम् "नेमौ रहौ कार्यिणौ किन्तर्हि निमित्तमिमौ द्विर्वचनस्य" इति भाष्येण हकारस्य तदापत्तिवारणेऽपि वाग्हरिरित्यादौ "खरिच" इति गकारस्य चर्त्वापत्तेरित्यलम् ।

## ऊकालोऽजिति—

नन्वत्र सूत्रे ह्रस्वपदापेक्षया लघुपदन्निवेश्य यत्र २ ह्रस्वग्रहणं तत्र २ सर्वत्र लघुग्रहणमेवास्तु ह्रस्वग्रहणञ्च मास्तु ।

नच लाघवाभावः ? "ह्रस्वं लघु" इति सूत्राकरणप्रयुक्तलाघवस्य विद्यमानत्वात् । नच "संयोगे गुरुः" इत्युत्तरार्थं तदिति वाच्यम् ? तत्रैव "संयोगे लघु गुरु" इति लघुपदघटितन्यासेनैवाभीष्टसिद्धेः ।

नचैवम् गुरुलघुसंज्ञयोरेकत्र समावेशे अचक्षमदित्यादौ "दीर्घो लघोः"इति दीर्घ आपद्येतेति । पूर्वन्तु "आकडारादेका संज्ञा" इति गुरुसंज्ञैवेति वाच्यम् ? लाघवमनुसन्धित्सुभिः "दीर्घो लघोः" इत्यत्र लघुपदं गुरुसंज्ञकभिन्नलघुसंज्ञकपरमिति लघुग्रहणसामर्थ्याद् व्याख्यानेन क्षत्यभावात् । एवम् "आकडारात्" इत्यधिकारे "ऊकाल"इत्यस्य पाठेन गुरुसंज्ञया लघुसंज्ञाया बाधेन "लघ्वक्षरम्पूर्वम्"इति वृक्षश्च धूमश्चेति समासे न वृक्षस्यैव पूर्वनिपात इति दोषः ।

नचैवम् गुरुसंज्ञया लघुसंज्ञाया बाधे देवछयतीत्यत्र तुग्नैव स्यात् सिद्धान्ते तु लघुसंज्ञाया बाधेऽपि ह्रस्वसंज्ञाबाधे गमकाभावेन तस्येष्टत्वादिति, एवमेव निष्टय इत्यादौ ह्रस्वेणः परस्य सस्य षत्वन्तादौ तद्धित इति भावार्थकेन षत्वानापत्तिरिति वाच्यम् ? तथा सति "ह्रस्वात्तादौ"इत्यादिसूत्रारम्भसामर्थ्याज् ज्ञापनाद् भूतपूर्वगतेराश्रयणेन निर्वाहसम्भवात् ।

नच तथा आकडारीयत्वास्वीकारेऽपि "संयोगे गुरुः" इत्यत्र लघुपदानुवृत्तेः गुरुसंज्ञया लघुसंज्ञाया बाधेनोद्देश्यासिद्ध्या उभयसंज्ञासमावेशस्यावश्यकत्वेन वृक्षधूमावित्यत्रत्यदोषो दुरुद्धर इति वाच्यम् ? प्लुतदीर्घयोर्गुरुसंज्ञावत्त्वेऽपि दोषविरहेण "संयोगेऽज् गुरु" इति विन्यस्यापि निर्वाहे उभयसंज्ञासमावेशस्याप्रमाणत्वात् । एवमेव देवछयति इत्यत्रापि "ज्ञापकसिद्धन्न सर्वत्र" इति साहाय्यमाश्रित्यापत्तिवारणसम्भवात् । एवमेव "सन्वल्लघुनि" इतिकैयटोक्तलक्ष्यानुरोधिव्याख्यानेन चाचक्षमदित्यादावपि नापत्तिः ? "दीर्घो लघोः" इतिप्रवृत्तेस्तत्रानिष्टत्वादिति ।

नच भेत्तेत्यादौ गुरुसंज्ञायां लघूपधगुणो न स्यादिति वाच्यम् ? "त्रसिगृधिधृषिक्षिपेः क्नुः"इति क्नोः कित्त्वसामर्थ्येन भूतपूर्वलघूपधस्य गुण इति कल्पनेनादोषात् ।

एवम् "इदितो नुम् धातोः" इतिसूत्रस्य हि इदिदन्तस्याङ्गस्याङ्गसंज्ञायोग्यस्य

धातूपदेशकाले नुमित्यर्थेन इन्दतीत्यादौ उपदेश एव नुम्प्रवृत्त्या गुणाप्रवृत्तेरदोषात्। यावता विनाऽनुपपत्तिस्तावत् सर्वं ज्ञाप्यत इति रीत्या च क्नोः कित्त्वसामर्थ्येन प्रकृतिप्रत्ययोभयसम्बन्धिसंयोगमादाय "संयोगे गुरु"इति सूत्रन्न प्रवर्त्तत इति ज्ञापनेन तोतोर्त्तीत्यादावदोषः।

**अत्रेदमनुसन्धेयम्**—यत् "ऊकाल" इति सूत्रे तन्त्रेण उश्च ऊश्च ऊ३श्चेति द्वन्द्वेनेतरयोगाख्येनोकारत्रयन्निर्दिश्यते मानञ्चात्र ह्रस्वदीर्घप्लुतसंज्ञात्रयविधानमेव। तत्र क्रमिकनिर्देशे च किम्प्रमाणमिति जिज्ञासायाम् द्विमात्रिकस्य प्रथमपाठे तस्यैव ह्रस्वसंज्ञायां "गोस्त्रियोः"इति सूत्रे गोग्रहणवैयर्थ्यापत्तिः। अन्ते पाठकरणे तस्यैव प्लुतत्वे "हैहेप्रयोगे"इति सूत्रं व्यर्थं स्यादिति द्विमात्रिकस्य मध्ये पाठसिद्धान्तः।

एकमात्रिकस्यान्त्यपाठे तस्यैव प्लुतसंज्ञायां"गुरोरनृतः" इति सूत्रेऽनृतइत्यस्य वैयर्थ्यापत्तिः। मध्ये पाठे च "तुल्यास्य" इति निर्देशासङ्गतिरत आदौ पाठसिद्धान्तः।

परिशेषाच्च प्लुतस्य सर्वान्ते पाठ इति न विस्मर्त्तव्यम्।

## मुखनासिकावचन इति—

नन्वत्र सूत्रे नासिकाग्रहणमकृत्वापि "मुखवचनोऽनुनासिकः"इति विन्यस्य मुखेनोच्चार्यमाणो वर्णोऽनुनासिकसंज्ञको भवतीत्यर्थेनैव सकलेष्टसिद्धौ किं गुरुभूतेनेति।

नच नासिकाग्रहणाभावे निरुक्तार्थेन शक्तेत्यादौ "अनुदात्तोपदेशवनति" इत्यादिना ककारस्याप्यनुनासिकत्वेन लोपापत्तिरिति वाच्यम्? तथासति लोपविधायकशास्त्रे "अनुनासिकलोपः" इत्यस्य स्थाने "ञमूलोपः" इतिपाठेन ञमूप्रत्याहारे ककारदौर्लभ्येन तदापत्तिवारणसम्भवात्। नचैवम् दुग्धम्पचतीति दुग्धपगित्यत्र "अनुनासिकस्य क्वि"इति दीर्घ आपद्येतेति वाच्यम्? तत्रापि अनुनासिकस्य स्थाने ञम इति पाठेनादोषात्।

नचैवमपि अग्निचिद् इत्यत्र "यरोऽनुनासिक" इति अनुनासिकापत्तिरिति वाच्यम्? तत्रापि "ञमि ञम् वा" इति पाठेनादोषात्। **इति चेदत्रोच्यते**— "ञमि ञम् वा"इतिन्यासे एतदाँश्चिनोषीत्यत्र पक्षे इष्टस्य एतनाँश्चिनोषीत्यस्यासिद्ध्यापत्तेः एतदूँ इति च न सिध्येदिति यथान्यासमेव श्रेयः।

ननु एवम् नासिकामनुगतोऽनुनासिक इतिव्युत्पत्तेर्बालैरपि सुगमतया अनुनासिकशब्देनैव तज्ज्ञानसम्भवे सूत्रमेवेदं संज्ञाविधायकं व्यर्थम्। नचास्याभावे

"यरोऽनुनासिक" इत्यादौ "स्वंरूप" सूत्रेणानुनासिकशब्दे पर एवेत्यर्थे सर्वत्राव्याप्तिरसम्भवो वेति वाच्यम्? "ङमुण्नित्यम्" इत्यादिनिर्देशैः "यरोऽनुनासिक" सूत्रे "स्वंरूप" सूत्राप्रवृत्तिज्ञापनात, भाष्ये "स्वंरूप"सूत्रस्य प्रत्याख्यानाच्च । इतिचेन्न; उक्तनिर्देशाश्रयणे प्रतिपत्तिगौरवात् अनुनासिकत्वज्ञानासमर्थम्प्रति सूत्रसार्थक्यात् ।

अत एव शेखरे मन्दप्रयोजनत्वमेवोक्तन्नतु सर्वथाऽप्रयोजनत्वमिति विभावनीयं सुधीभिः ।

## तुल्यास्यप्रयत्नमिति—

ननु अत्र ताल्वादिस्थानं यस्य येन तुल्यं तन्मिथः सवर्णसंज्ञकम्भवतीत्यर्थकम् "तुल्यास्यं सवर्णम्"इत्येवास्तु किम्प्रयत्नग्रहणेन । नच वाक्श्च्योततीत्यादौ ककारशकारयोस्सावर्ण्यात् "झरो झरि" इति लोपापत्तिरिति वाच्यम्? तत्र "झयो झयि"इति न्यासेन वारणसम्भवात् । नच तथासति निंसे इत्यादौ लोपानापत्तिरिति वाच्यम्; तत्र "झलो झलि"इति लोपेनैव निर्वाहात् ।

केचित्तु—"झलो झलि"इतिसकारलोपस्य नित्यतया प्रयोगद्वयानापत्तेः "सझयः सझयि सवर्णे"इति विन्यस्य दोषो वार्य इति निंसे इत्यादि सुसाधु इति वदन्ति । न च रेफणकारयोरपि सावर्ण्येन कुन्डं रथेनेत्यत्र परसवर्णो णकार आपततीति वाच्यम्? "तुल्यास्यमर्णमि"तिन्यासेनादोषात । एवमेव "कुहोश्चुः"इत्यत्रहकारोपादानेन ऊष्मणां स्पर्शैर्न सवर्णसंज्ञेति ज्ञापनेन हकारकवर्गयोः शकारचवर्गयोश्च सावर्ण्यप्रयुक्त "चोःकुः"इतिशकारस्य हकारापत्तिरपि वार्या ।

अत एव च न तत्करोतीत्यादौ "झयो होऽन्यतरस्याम्" इत्यस्यापि प्रवृत्त्यापत्तिः "कुहोश्चुः"इतिसूत्रे कवर्गग्रहणेन "पञ्चवर्गभिन्नग्रहणेन वर्गग्रहणन्न वर्गग्रहणेन तद्भिन्नग्रहणन्नेति ज्ञापनात् ।

नच यकारशकारयोस्सावर्ण्यापत्तौ वाक् श्च्योतति इत्यादौ यकारस्याण्त्वेन शकारस्यापि ग्रहणे शस्य "लोपो व्योः" इति लोपापत्तिः हरिंशम्भुम्भजे इत्यत्र अनुस्वारस्य परसवर्णयकारापत्तिश्चेति वाच्यम्? "शषसर्"इतिसूत्रारम्भेण परस्परमन्तस्थोष्मणां सावर्ण्याभावज्ञापनात् ।

नच झलादिप्रत्याहारे शकारादिग्रहणाय तदावश्यकमिति ज्ञापनमसम्भवग्रस्तमिति वाच्यम्? "रषाभ्याम्"इति सूत्रे षकारग्रहणेन तथा ज्ञापनसम्भवात् । तेन

दर्शनादिशब्दे णत्वादिव्युदासः । **इतिचेदत्रोच्यते**—अनेकक्लिष्टकल्पनापेक्षया प्रयत्नग्रहणस्यावश्यं कर्त्तव्यत्वात् ।

ननु एवमत्र "तुल्यप्रयत्नं सवर्णम्" इत्येवास्तु किमास्यग्रहणेनेति । नच तथा सति तकारपकारयोस्सावर्ण्याद् "झरो झरि सवर्णे"इति तप्तेत्यादौ पकारस्य लोपापत्तिरिति वाच्यम् ? भिन्नस्थानयोर्न सवर्णसंज्ञेति "ऋलृवर्णयोर्मिथः"इतिवार्त्तिकारम्भेण ज्ञापनाददोषात् ।

नच भिन्नस्थानयोरचोश्चेत् सवर्णसंज्ञा तर्हि ऋलृवर्णयोरेवेति विपरीतनियमस्यापि सम्भवेन तप्तेत्यत्र दोषतादवस्थ्यमिति वाच्यम् ? "झरो झरि"इत्यत्र यथासंख्यसूत्रप्रवृत्त्याऽदोषात् । इति चेन्न ? शिण्ढीत्याद्यर्थम् सवर्णग्रहणस्यावश्यकत्वेन यथासंख्याप्रवृत्तेः ।

ननु "अतो लरान्तस्य" इति सूत्रे लकारोच्चारणेन भिन्नस्थानकानां सवर्णसंज्ञा न भवतीति कल्पनेन तप्तेत्यादौ दोषो नेति । नच रप्रत्याहारानित्यत्वज्ञापनार्थन्तच्चरितार्थमिति वाच्यम् ? यावता विनाऽनुपपत्तिस्तावत् सर्वं ज्ञाप्यते इतिरीत्या तद्ज्ञापनासम्भवासम्भवात् इति चेन्न?पुरस्तादपवादा इति न्यायेन माभवानालीदित्यत्र लकारस्य "नेटि"इति प्रबाध्य चरितार्थत्वादपवादमपि अमुम्प्रबाध्य अचारीदित्यत्र "अतो हलादेः" इतिविकल्पापत्तेः । अस्माकन्तु रल्पदाभ्यां बाध्यसामान्यचिन्तापक्षबोधनद्वारा विकल्पवृद्धेर्वाधान्नायन्दोषः ।

नच "लोपो व्योः" इत्यत्र रलीति वक्तव्ये वलीति कथनेन भिन्नस्थानकानां सावर्ण्याभावो ज्ञाप्य इति वाच्यम् ? लाघवाभावेन तथा कथनस्य कैरपि स्वीकार्यत्वासम्भवात् ज्ञानगौरवस्याधिकस्यापाताच्चेति यथान्यासमेव रमणीयम् ।

## पूर्वत्रासिद्धम्—

ननु "पूर्वत्र" इत्येव सूत्रमस्तु "आमन्त्रितं पूर्वमविद्यमानवत्" इत्यतः अविद्यमानवदित्यनुवर्त्त्य पूर्वत्रोत्वे कर्त्तव्ये "रोरि"इतिलोपस्याविद्यमानवद्भावेन मनोरथ इत्यादेस्सिद्धिर्निर्बाधेत्यसिद्धग्रहणं व्यर्थमिति चेन्न?दीर्घात् पूर्वं नलोपे जाते ततो दीर्घे कर्त्तव्ये "कुलालस्याविद्यमानत्वेऽपि तत्कृतकार्यस्य विद्यमानत्व"न्यायेन नलोपशास्त्रस्याविद्यमानवत्त्वेऽपि तत्कृतकार्यस्याविद्यमानवत्त्वाभावाद् गोमानित्याद्यसिद्ध्यापत्तेरसिद्धग्रहणस्यावश्यकत्वात् ।

## भूवादयो धातवः—

ननु "क्रियार्थो धातवः, वादयो धातवः" इति न्यासेन वा सिद्धौ भ्वादिग्रहणमत्र किमर्थम्। नच तथा सति क्रियावाचका धातुसंज्ञका इत्येतन्मात्रार्थे हिरुक् पृथगित्याद्यव्ययानान्तथात्वेन तत्त्वापत्तिः, अव्ययेषु पाठस्तु "अव्ययसर्वनाम्नामकच्" इत्यकजर्थ इति वाच्यम्? क्रियावाचकपदान्तरसमभिव्याहारमन्तरा तेषां हिरुगादीनां क्रियावाचकत्वाप्रत्ययात् क्रियान्तराकाङ्क्षानुत्थापकतावच्छेदकधर्मवत्स्वरूपक्रियावाचकत्वस्य तत्राभावात् क्षत्यभावात्। इति चेन्न? शिश्ये इत्यत्र एशादेशस्य भावार्थकस्य क्रियावाचकत्वेन धातुत्वापत्त्या "आदेच उपदेशे" इत्यात्वापत्तेर्दुरुद्धरत्वात्। ननु "आदेच" इति सूत्रे धातुग्रहणासम्बन्ध उक्तो भाष्ये इति "यश्चोभयोस्समो दोषः परीहारस्तयोस्समः। नैकः पर्यनुयोक्तव्यस्तादृगर्थविचारणे" इति न्यायेन भवतोऽपि समानः। किञ्च शब्दरत्नोक्तदिशा "अशिति" इत्यस्य प्रसज्ज्यप्रतिषेधत्वेऽपि शित्परत्वयोग्यस्यैवात्त्वविधानात् वासादृश्यस्य अन्यानभिहितक्रियावाचकत्वेन विवक्षणाद् वा नायं दोष इति चेन्न? तथापि प्राकृतभाषाप्रयोगाणाम् आणवयतीत्यादीनां धातुत्वापत्त्या शास्त्रविषयतया साधुत्वस्यानिष्टस्यापत्तेः। **इदमत्रानुसन्धेयम्**—यद् भगवता भाष्यकृता "वृद्धिरादैच्" सूत्रे "साध्वनुशासनेऽस्मिन् शास्त्रे" इति स्पष्टमुक्ततया पाणिनिसूत्राणां साधुत्वविधायकत्वम्। एवञ्च गगरी अत्यर्थमित्यादावपि "इको यणचि" इत्यादिशास्त्रप्रवृत्त्यापत्त्या तेषामपभ्रंशानामपि साधुत्वापत्तेरनिष्टवारणाय "यत्किञ्चिच्छास्त्रबोधितसाधुत्ववत्येव पाणिनिसूत्राणांप्रवृत्तिः" इति कल्प्यते।

नचैवं यच्छास्त्रं सर्वतः प्रथमं ( वृद्धिरादैच् ) प्रवर्तते तस्य प्रवृत्त्यनापत्तिः तल्लक्ष्याणां शास्त्रान्तराबोधितसाधुत्ववत्त्वाभावादिति वाच्यम्? संज्ञाशास्त्राणां यत्किञ्चिच्छास्त्राबोधितसाधुत्वकेष्वपि प्रवृत्तिस्वीकारात्।

नचैवम् "अर्थवत्" सूत्रस्यापि असाधुषु प्रवृत्तिप्रसङ्ग इति वाच्यम्? तत्राधातुग्रहणेन संज्ञाशास्त्रत्वेऽपि यत्किञ्चिच्छास्त्रबोधितसाधुत्वकेष्वेव प्रवृत्तिस्वीकारात्।

एवञ्च संज्ञासूत्राणि आवृत्त्या संज्ञाविधायकानि साधुत्वविधायकानि चेति "क्रियार्थो धातव" इति आणवयतीत्याद्यसाधूनामपि साधुत्वं साधु विदध्यादित्यापत्तिः स्फुटैव।

नच भू सत्तायाम् इत्यादीनामेव साधुत्वविधायकता नतु संज्ञासूत्राणामिति दोषो

वारयितुं शक्य इति वाच्यम् ? अनेकवचनानां साधुत्वविधायकत्वकल्पनापेक्षया लाघवेन, अलंश्रमेणेत्यत्र श्रमेणेत्यस्य साधनक्रियावाचकतया धातुत्वापत्तेश्च "भूवादय" इत्यस्यैव तत्त्वस्वीकारात् ।

## सुप्तिङन्तम्पदमिति—

भगवता भाष्यकृता "ह्रस्वो नपुंसक" इति सूत्रे "प्रातिपदिकस्येति किन्तिबन्ते माभूत् काण्डे कुडये रमते ब्राह्मणकुलम्" इति स्पष्टमुक्ततया "तिप्तस्झी" ति तिपः पकारादारभ्य "स्वौजसमौट्"इति सुपः पकारं यावत् तिप्प्रत्याहारं स्वीकृत्य "तिबन्तम्पदम्" इति लघीयान् न्यास एव स्वीकार्यः किं गौरवादरेण ।

नच तथा सति यासुडागमस्यापि तादृशकल्पितप्रत्याहारान्तर्गतत्वेन तदन्तस्यापि पदत्वे भूयासमित्यादौ सकारस्य "ससजुषो रुः" इति रुत्वापत्तिरिति वाच्यम् ? तिप्प्रत्याहारघटकस्वादिसाहचर्येण "प्रत्ययाप्रत्यययोः" इतिपरिभाषया वा प्रत्ययस्यैव ग्रहणाद् यासुडादेरागमत्वेन प्रत्ययत्वाभावात् । यदागमन्यायेन यासुड्विशिष्टस्य प्रत्ययत्वेऽपि केवलस्य यासुटोऽतथात्वात् । केचित्तु पचतु भवतु इति सततं यत्राभिधीयते ते पचतुभवतवो व्यापारास्तत आचारक्विबन्ताल्लटि शपि गुणे "एङः पदान्तादति" इति पूर्वरूपे पचतुभवतोऽतीति भवति । "स्वादिष्वसर्वनामस्थाने" "यचि भम्" इत्यत्र योगविभागपरया मध्ये चेत् सुबन्तन्तदपि भम्भवति इति भाष्योक्त्या भवतु इत्यादेः सुबन्तत्वाभावेन पदत्वादिष्टं सिध्यति । इदानीं मध्ये चेत् तिबन्तमित्युक्तौ तस्य तिबन्तत्वेन भत्वात् पूर्वरूपानापत्तिरिति वदन्ति । तन्न ? तादृशभाष्ये भसंज्ञानिमित्तभूतयादिसर्वनामस्थानभिन्नाजादिस्वादिप्रत्यये पर एव तादृशोक्त्या शबादेरतथात्वेनादोषात् ?

## नाऽऽज्झलौ—

ननु शिवोऽर्च्य इत्यादौ अकारहकारयोस्सावर्ण्येन हकारग्रहणेनाकारस्यापि ग्रहणात् "हशि च" इत्यनेनैवोत्त्वे सिद्धे "अतो रोरप्लुतादप्लुते" इति सूत्रारम्भसामर्थ्यादज्झलोर्न सवर्णसंज्ञा मिथ इति ज्ञापनादेव सर्वेष्टसिद्धौ "नाऽऽज्झलौ"इति सूत्रं व्यर्थमिति चेन्न ? आकारे उत्वव्यावृत्तये "अतोरोः" इति सूत्रारम्भस्य चारितार्थ्येन ज्ञापकत्वासम्भवात् ।

केचित्तु—"नाक्शलौ" इत्येवास्तु किं "नाऽऽज्झलौ" इत्यनेनेति वदन्ति । ते च एकारस्य तालुमात्रजन्यत्वमते एकारशकारयोस्सावर्ण्यापत्तेः पराभूताः ।

अन्येतु—"यजुष्येकेषाम्" इतिनिर्देशासङ्गत्या एकारस्य तालुमात्रजन्यत्वमि-
पक्षो न सूत्रकृत्सम्मतः' "ऌति ऌवा" इति वार्तिकविधेयेषत्स्पृष्टऌकारस्य लका-
। सावर्ण्यं स्यादतो न तथा सूत्रणीयमिति वदन्ति । एतेन "नाऽऽक्शलौ" इति
ासोऽपि परास्त इति । प्रयत्नपञ्चकस्वीकारे तु सूत्रम्भाष्ये प्रत्याख्यातम् ।

## इको गुणवृद्धी—

ननु "अचश्च" इत्यत्रैव "गुणवृद्धी" इति प्रपठ्य "ऊकालोऽच्"इत्यतोऽजिति
ानुवर्त्त्यं गुणवृद्धिह्रस्वदीर्घप्लुतशब्दैर्यत्राज् विधीयते तत्राच इति षष्ठ्यन्तम्पदमुप-
ष्ठते इति व्याख्ययेष्टसिद्धेरप्रत्यूहत्वात् "इको गुणवृद्धी" इति पृथक् सूत्रं किम-
म् । अकारादिषु च प्राप्तगुणादिवारणन्तु भाष्याक्तदिशाऽवसेयम् । तथाहि "अच"
युपस्थित्या उम्भितुमित्यादौ हलः प्राप्तिरेव न, यातेत्यादावाकारस्य च न गुणा-
प्तिः । सामग इत्यादौ "आतो लोपः" इत्यर्थं कृतस्य "गापोष्टक्" इति टकि कि-
वस्य गुणपररूपद्वारैवेष्टसिद्ध्या वैयर्थ्येन आकारस्य गुणो न भवतीति कल्पनात् ।

नच ग्लायतीत्यादौ गुणप्रसङ्गः ? ऐकारोच्चारणसामर्थ्येन सन्ध्यक्षरस्य न गुण
येवं कल्पनया दोषविरहात् । नच पेचिथेत्यादावाकारस्य गुणे "न शसदद" इति
त्वाभ्यासलोपौ न स्यातामिति वाच्यम् । "थलि च सेटि" इति सूत्रवैयर्थ्येन यत्र
णादेशेन रूपान्तरप्राप्तिस्तस्यैव गुणशब्देन भावितस्य निषेधककुक्षिप्रहात् ।

नच इग्ग्रहणमुत्तरार्थम् अत एव "क्ङिति च"इत्यनेन इग्लक्षणयोरेव निषेधेऽ-
प्रथाऽजित्यनुवृत्त्याऽज्लक्षणयोस्तत्त्वनिषेधे "अचो ञ्णिति" इत्यादिविहितानामपि
ाषेधापत्तिरिति वाच्यम् । "अचो ञ्णिति" इति सूत्रे क्ङितामभावेन लैगवायन
त्यादौ निषेधेन "क्ङिति च" इतिं सूत्रस्यैव वैयर्थ्येन तद्धितक्ङिति निषेधाभावज्ञा-
नेन गित्साहचर्येण धात्वधिकारविहितकिन्ङितोर्ग्रहणाच्चादोषात् । इति **चेदत्रो-
च्यते**—कामयते इत्यत्र वृद्ध्यभावापत्तेर्यथान्यासस्यैवौचित्यात् ।

अन्ये तु शब्दव्यापाराश्रयणानुरोधाद् यत्र गुणवृद्धी विधीयेते तत्रेक इति षष्ठ्य-
न्तम्पदमुपतिष्ठत इत्यर्थकेन "इकस्तौ" इति सूत्रेणैव सिद्धिः किं गुरुभूतसूत्रेणेति ।
च तथा सति "पथिमथ्यृ" इत्यादावपि तत्प्रवृत्तिरनिष्टा स्यादिति वाच्यम् । "न
ासयोः" इति निर्देशेन "नेदमदसोरकोः" इति सूत्रारम्भेण "दिव औत्" इत्यत्र
कारप्रश्लेषेण "इतोऽत्सर्वनामस्थाने" इति सूत्रारम्भेण च "त्यदादीनाम" इत्या-
ाविकपरिभाषोपस्थितिकल्पनेनादोषात् । वस्तुतस्तु "इकः" इत्येव सूत्रणीयम्

"तौ" इत्यपि व्यर्थम्, सम्पूर्णं पूर्वसूत्रद्वयमनुवर्त्त्य "वृद्धिः" इत्यादैचौ यत्र विधीयेते 'गुणः' इत्यदेङौ यत्र विधीयेते तत्रोपतिष्ठते इक इति व्याख्यानाददोषात्। उक्तव्याख्याने "इतोऽसर्वनामस्थाने" इति सूत्रीयमिद्ग्रहणमेव मानम्, अन्यथा तत्रापि इक्परिभाषाया उपस्थापनेनैव "येन नाव्यवधान" न्यायेन नकारादिव्यावृत्तेस्सौलभ्यात् तस्य वैयर्थ्यसम्भवात्। अत एव भाष्ये इग्ग्रहणमात्सन्ध्यक्षरनिवृत्त्यर्थमिति प्रोक्तम्।

उच्छृङ्खलास्तु "न धातुलोप" इत्यादावनुवृत्तये गुणवृद्धिपदम्। नच संज्ञासूत्राभ्याम् तदनुवृत्त्या निर्वाहसम्भवः। तत्र तयोः शब्दपरत्वादिति विभावयन्ति।

## अलोऽन्त्यस्येति—

ननु "अलोऽन्त्यस्य" ङिच्च" "अनेकाल्शित्सर्वस्य"इति सूत्रत्रयस्थाने "ङिदलोऽन्त्यस्याशिदनेकाल्" इत्येवास्तु लघुभूतं किं योगत्रयेण। तत्रांशद्वयम् "ङिदलोऽन्त्यस्य" ततः "अशिदनेकाल्" इति। प्रथमस्य ङिदादेशोऽन्त्यस्य अलो भवति इति, द्वितीयस्य च शिद्भिन्नोऽनेकाल्भिन्नश्चादेशोऽन्त्यस्यालो भवतीत्यर्थः। ततः "आदेः परस्य" परस्य विहितो यः शिद्भिन्नोऽनेकाल्भिन्नो वादेशः परस्यादेरलो भवतीत्यर्थः। अवशिष्टस्य शिदनेकालादेशस्य सर्वादेशत्वं सुतरामिति।

ननु "तस्मादित्युत्तरस्यादेः" इत्येकयोग एवास्तु परस्य ग्रहणाकरणलाघवात्। तत्र "तस्मादित्युत्तरस्य"इत्येकम् वाक्यम् "आदेः"इत्यपरम्। तत्र उत्तरस्येत्यनुवृत्तिरावृत्तिश्च। एवञ्च उत्तरशब्दोच्चारणेन विहितकार्यमुत्तरस्य आदेर्भवति तेन "निरयं ङित" इत्यादौ न दोष इति चेन्न। "आदेः परस्य" इत्यत्र तथा न्यासे आदेः इत्यंशे स्थानषष्ठ्याः सम्बन्धे "तस्मादित्युत्तरस्य" इत्यत्रापि तत्सम्बन्ध इति तस्यापि आगमविषयेऽप्रवृत्त्यापत्तेः। असम्बन्धे "आदेः" इत्यस्य आगमविषये प्रवृत्त्यापत्तौ देवास इत्यत्र "आज्जसेरसुक्" इति सूत्रेण "आद्यन्तौ टकितौ"इति सहकृतेनासोऽकारात् परमसुकि सकारस्य संयोगान्तलोपे पररूपे दीर्घे विसर्गे च देवा इत्यनिष्टापत्तेः।

नच तत्र "आज्जसेरसुट्" इतिन्यासे न दोष इति वाच्यम्। "अश्वक्षीरवृषलवणानामात्मप्रीतौ क्यचि" इत्यत्रापि तदनुवृत्त्या अश्वादिभ्यःप्राक् असुडापत्तेः। नच तत्र क्यचि इत्यस्य स्थाने "क्यचः" इति षष्ठ्यन्तं पठित्वा क्यच एवासुटो वधाने न दोष इति वाच्यम्। यदागमपरिभाषयाऽसुड्विशिष्टेऽपि क्यच्त्वमादाय

"क्यचि च" इतीत्वापत्तेः। पूर्वत्र "अश्वक्षीर" इति सूत्रे "क्यच्यसुक्" इत्युक्तौ दोषाभावेऽपि लाघवाभावो द्रष्टव्यः।

एवमेव "तस्मादित्युत्तरस्य" इत्यस्य स्थाने तथा न्यासे अष्टौ इत्यत्र परत्वात् "आदेः परस्य" इत्यस्य प्रवृत्तौ सर्वादेशत्वानापत्तेरिति समुक्तं शेखरादिषु।

## अनेकाल्शित्सर्वस्येति—

ननु अत्र "नानेकाल्शित्" इत्येव न्यासः कुतो नेति चेन्न ? तथा सति अनन्तरस्य विधिः प्रतिषेधो वेति न्यायेन "आदेः परस्य" इत्यस्यैव तद् बाधकं स्यात् नतु "अलोऽन्त्यस्य" इति सूत्रस्येति णलादयोऽन्त्यस्यापतेयुरिति शेखरसिद्धान्तात्।

नचैवम् अनेकाल्विषयेऽपि अलोऽन्त्यशास्त्रस्य निर्बाधत्वे "ङिच्च" इतिसूत्रवैयर्थ्यापत्तिरिति तत्सामर्थ्येन प्रकृतेऽनन्तरन्यायस्याप्रवृत्तिर्ज्ञाप्यतामिति पूर्वोक्तयोगस्य "अलोऽन्त्यस्य "आदेःपरस्य"इत्युभयोर्बाधकत्वे न क्षतिरिति वाच्यम् ? ज्ञानगौरवस्य विशिष्टस्य तथा सम्भवात्। नच "ङिच्च" इति सूत्रं "ङिदेवानेकालन्त्यस्य" इति नियमस्य सम्पादनार्थमेवञ्च "अनेकाल्" सूत्रेऽनेकाल्ग्रहणं व्यर्थमिति वाच्यम् ? "अतो भिस ऐस्"इतिसूत्रेण "आदेःपरस्य"इति आदेरादेशापत्तेर्दुर्वारत्वादित्यलम्।

## इको यणचि—

ननु अत्र "यणचि" इत्येव न्यासोऽस्तु किमर्थमिग्ग्रहणम्। नच सोमसुदत्रेत्यादौ हलोऽपि यणापद्येतेति वाच्यम् ? "ह्रस्वस्य पिति कृति तुक्" इत्यतः ह्रस्वपदं "दीर्घात्" इत्यतो दीर्घपदञ्चानुवर्त्य षष्ठ्यन्तत्वेन विपरिणम्य ह्रस्वदीर्घयोर्यणादेशः स्यादचीत्यर्थेन दोषविरहात्। नच दण्डाढकमित्यादौ यणापत्तिः ? अपवादेन सवर्णदीर्घेण तद्बाधात्। एवमेव कृष्णैकत्वमित्यादौ गङ्गोदकमित्यादौ च वृद्धिगुणाभ्यां बाधः। एवमयादिविषयेऽपि तत्तद्विधायकैरस्य बाधः प्लुतस्य च प्रकृतिभाव एव स्यादिति न कुत्राप्यापत्तिरवलोक्यते।

नच "ह्रस्वस्य पिति" इति सूत्राद् धाराप्रवाहन्यायेन ह्रस्वस्यानुवृत्तौ "पदान्ताद् वा" इत्यत्रापि तत्सम्बन्धाद् दधिच्छादयतीत्यत्र वैकल्पिकतुगापत्तिः, नच "छे च" इत्यस्य वैयर्थ्यशङ्काऽपि?अपदान्ते नित्यतुगर्थन्तस्य चारितार्थ्यात् इति वाच्यम् ? लाघवानुरोधेनेह मण्डूकप्लुत्यैव ह्रस्वस्येत्यस्य सम्बन्धात्। **इतिचेदत्रोच्यते**—चिनुहि अत्रेत्यादौ "ई चाक्रवर्मणस्य" इत्यादिना "प्लुतप्रगृह्या अचि

नित्यम्" इति प्राप्तस्य प्रकृतिभावस्य निषेधे पश्चादिष्टस्यापि यणोऽभावापत्तेर्ह्रस्वत्वादेरभावादिति । एवम् "तनोतेर्डउः" इतिसूत्रनिष्पन्ने ड इत्येव वक्तव्ये डउ इतिकरणादपवादस्यापि गुणस्य निवृत्तौ यणापत्तेः । तथैव यणोऽपि निवृत्तिस्तु न शक्या; अन्तरतमयणोऽभावेन पर्यायेण चतुर्णामपि प्रवृत्त्या तथा कर्तुमयोग्यत्वात् ।

नच यणम्प्रबाध्य प्राप्तस्य गुणविधायकस्य निरुक्तरीत्या वारणेऽपि देवदत्तहन्तृहतन्यायेन पुरा बाधितो यणिदानीम् मापद्यतामिति वाच्यम्; "तौ सत्" इत्यत्रैव प्रकृतेऽपि तन्न्यायाविषयतया यणो दुर्वारत्वात् ।

नच चिनुहि अत्रेत्यादौ प्लुतस्यासिद्धत्वेन यणसिद्धिरिति वाच्यम्; भाष्यकृता "ईदूतौ" इति सूत्रे "प्लुतप्रगृह्याः" इत्यत्र प्लुतग्रहणसामर्थ्येन "प्लुतः स्वरसन्धिषु सिद्धः" इति स्पष्टमुक्ततया प्लुतस्य यण्यसिद्धत्वाभावात् ।

ननु "अप्लुतवदुपस्थिते" इत्यत्र अप्लुते इवेत्यप्लुतवदिति तदर्थेन प्लुतोऽप्लुतवत् कार्यं लभत इति कार्यातिदेशाङ्गीकृत्या चिनुहि अत्रेत्यादौ न दोषः । नच "अप्लुवत्" इत्यादिभिः कार्यातिदेश एव क्रियते इत्यङ्गीकारे अग्नी इति इत्यादौ प्रगृह्यसंज्ञानिमित्तकप्रकृतिभावम्प्रबाध्य परत्वाद् यणाद्येव स्यादिति वाच्यम्; अतिदिश्यमानकार्याणामुत्पत्तिदेश एव देश इत्यङ्गीकारेण परत्वात् प्रगृह्याश्रयप्रकृतिभावस्यैव सत्त्वादिति चेन्न; इको यणेव क्वचिद् यथा स्यात् यदन्यत् प्राप्नोति तन्माभूत् किमन्यदिति जिज्ञासिते "इकोऽसवर्णे" शाकलमिति । अत एव "सिति च" "न समासे" इति तत्फलितार्थभूते एव नापूर्वे वार्त्तिके इति परे ।

अन्येतु यातेर्यङन्तात् क्तिचि यातिरित्यत्र आकारस्य स्थानिवत्त्वेनाच्परत्वात् यणापद्येतेति कर्त्तव्यमिग्ग्रहणमवश्यमित्याहुः ।

नच तथापि "अको यणचि" इत्येवास्तु न्यासःपरत्र सवर्णदीर्घविधायके तत एवानुवृत्त्या सिद्धौ अग्ग्रहणाकरणलाघवात् । सवर्णेऽचि दीर्घेण स्वप्रवृत्तियोग्ये गुणवृद्धिभ्यां बाधेन च दोषवैकल्यादिति वाच्यम्; पूर्वोक्ते यातिरित्यत्र दोषतादवस्थ्यात् ।

यत्तु "अभ्यासकार्ये तदुत्तरखण्डाजादेशो न स्थानिवदिति निषेधान्न दोष इति, तत्तुच्छम् धातूत्तराकारस्य स्थानिवत्त्वप्रतिषेधेऽपि यङ्घटकाकारलोपस्य उत्तरखण्डाजनादेशत्वात् तत्राभ्यासकार्यप्रतिबन्धकीभूततदुत्तरखण्डाजादेशो न स्थानिवदिति कल्पनस्यावश्यकत्वेन स्थानिवद्भावनिषेधाप्रवृत्त्या यणापत्तेरशक्यपरिहारत्वात् ।

ननु "इको यण्" इत्येव सूत्रमस्तु किमत्राज्ग्रहणेन । नच हलि परतोऽपि मधु यातीत्यादौ यणापत्तिरिति वाच्यम् ? तथा सति चेता स्तोता इत्यादौ जातेऽपि इडागमे यणि "लोपो व्योर्वलि" इति लोपेनैवेष्टसिद्धौ तादृशोऽनिष्टस्येडागमस्य वारणाय "एकाच उपदेशेऽनुदात्तात्" इति आरब्धो निषेधो व्यर्थस्सन् ज्ञापयिष्यते हलि परतो यण् न भवतीत्यदोषात् ।

नचैवम् भवितेत्यादावपि यणापत्त्या इटोऽश्रवणप्रसङ्गादिडागमविधानसामर्थ्यादिटो यण् न भवतीति कल्पनात् चेतेत्यादौ तदापत्तेस्तादवस्थ्यादिटः श्रवणवारणाय "एकाच उपदेशे" इति निषेधश्चरितार्थो नोक्तार्थे ज्ञापक इति मधु यातीत्यत्रापद्यमानो यण् तदवस्थ इति वाच्यम् ? अचेतीदित्यादौ संयोगान्तलोपसंयोगादिलोपयोर्विषयभेदेऽप्युत्सर्गापवादभाववत् प्रकृते "इट ईटि"इति सलोपस्य येन नाप्राप्तन्यायेन यण्बाधकत्वात् तेन यण्बाधे पश्चाद् दीर्घेण तद्बाधे इड्विधेश्चारितार्थ्यात् पूर्वोक्तज्ञापने बाधाभावात् ।

नच तावन्मात्रप्रयोजनकत्वे "इट् सिच" इत्येवास्तु सामान्यत इड्विधानं यणभावकल्पकमिति न "एकाच उपदेशे"इत्यस्य ज्ञापकत्वं युक्तिमिति वाच्यम् ? ग्रहीता ग्रहीष्यतीत्यादेरसिद्धिप्रसङ्गात् । नच तत्रापि उक्तरीत्या यणि वलि लोपे गुरुशरीरसूत्रप्रणयनं व्यर्थमेवेति वाच्यम् ? तत्र यणपवादस्य "ग्रहोऽलिटि" इति दीर्घस्य प्राप्तत्वात् यणोऽप्रवृत्त्या तत्रेटः प्रवृत्त्यर्थं सामान्यतः सूत्र णयनस्यावश्यकत्वात् ।

नच तथापि "इट् सिचः, आर्धधातुकस्य वलादेर्ग्रहः, अलिटि दीर्घः" इति न्यासाश्रयणेन अचेतीत् ग्रहीता ग्रहीष्यतीत्यादिसिद्धौ तथाविधन्यासमनादृत्य सामान्यत इड्विधानमिटो यणभावकल्पकमेवेति वाच्यम् ? "आर्धधातुकस्य वलादेर्ग्रह" इत्यादिपाठे वरीतेत्यादीनामसिद्ध्यापत्तेः । इदानीं ग्रहेरेव इड्विधानाङ्गीकारात् वृञश्चेट एवाभावात् । पूर्वन्तु "वृतो वा" इतिदीर्घेण बाधाद् यणोऽप्राप्त्या दीर्घस्य सिद्धिः ।

नच "वृतो वा"इत्यादीड्दीर्घविधानसामर्थ्येनैव तत्रेड् भविष्यतीति वाच्यम् ? तथा सति "आर्धधातुकस्य वलादेर्ग्रहः" इति न्यासे शेकिथेत्यादेरसिद्धिप्रसङ्गात् इटोऽभावेन "थलि च सेटि" इत्यस्याविषयत्वादप्राप्तेः । यथोक्तन्यासे तु यणपवादः

एत्वाभ्यासलोपौ इति तत्सिद्धिरप्रत्यूहा । एवञ्च "एकाच उपदेशे" इति निरुक्तज्ञापकताबोध उचित एवेति ।

नच "दीधीवेवीटाम्" इति सूत्रे इङ्ग्रहणम्भाष्ये प्रत्याख्यातम् तथाहि "नेड् वशि कृति" इतिसूत्रादिटमनुवर्त्यैव सिद्धे "आर्धधातुकस्येड् वलादेः" इति सूत्रे पुनरिड्ग्रहणमिट् इडेव भवतीति ज्ञापनार्थम् । तथाच गुणवद् यणोऽप्यप्राप्त्या वलिलोपासम्भवेन चेतेत्यादिसिद्धये "एकाच" इति इण्निषेधकमावश्यकञ्च ज्ञापकतामर्हतीति वाच्यम् ? तादृशज्ञापनस्याङ्गगुणादिबाधनाय कल्पितत्वेन विशेषापेक्षत्वात् अनाङ्गयणादिषु तदप्रवृत्तेः । अन्यथा पिपठोः अचेतीदित्यादौ दीर्घस्यापि तथात्वेन बाधसम्भवात्तेषामप्यसिद्ध्यापत्तेः । स्पष्टञ्चेदं सर्वमपि तत्रैव भाष्ये । तथा च हलि परतो यण् न भवतीति ज्ञापनस्य "एकाच"इति सूत्रेण कल्पयितुं शक्यतया प्रकृतमज्ग्रहणं व्यर्थमेवेति चेन्न ? "एचोऽयवायावः" इत्युत्तरार्थन्तदावश्यकत्वात् । नच तत्रापि न तदावश्यकता, नच हलि परेऽपि अयाद्यादेशापत्तिः इति वाच्यम् ? एवं सति "वान्तो यि प्रत्यये" इति सूत्रवैयर्थ्येन हलि परे ओदौतोर्वान्तादेशश्चेत्तर्हि प्रत्ययस्थयकारे एवेति नियमेन,हलि परतोऽपि एकारस्यायादेशस्स्याच्चेत् वलि लोपात् ह्रस्वात् परत्वैनैव सम्बुद्धिलोपसम्भवे हरे इत्यादौ सम्बुद्धिलोपमात्रप्रयोजनकस्य ( प्रत्याहारं बोधयतः ) एङ्ग्रहणस्य वैयर्थ्येन एकारस्याचि परत एवायादेश इति ज्ञापनेन, देविकायां भवं दाविकमिति सिद्धये "देविका शिंशपा" इत्यादिवृद्ध्यपवाद आकारो विहितः। यदि हलि परतोपि ऐकारस्यायादेशस्तदाऽऽयादेशे वलि लोपे च दाविकमिति सिद्धौ तदर्थमारब्धेनाकारविधायकेन व्यर्थीभूय ऐकारस्याचि पर एवायादेशो भवतीति कल्पनेन, "अनुवादे चरणानाम्' धातोस्तन्निमित्तस्यैव, सम्बुद्धौ शाकल्यस्य, प्रत्यये, इत्यादिनिर्देशैश्च हलि परतो नायायादेशा इति कल्पनेनैव निर्वाहे नोत्तरार्थमप्यज्ग्रहणमिह कर्त्तव्यमिति व्यर्थन्तदिति वाच्यम् ? तथापि "आद्गुणः" इत्यत्रानुवृत्त्यर्थन्तस्यावश्यकत्वात् ।

नच "दिव औत्"इत्यत्र "दिवोऽम्" इति विन्यस्य दिवोऽमागम एव विधीयताम् , एवञ्च दिव् स् इत्यत्र अमागमे कृते द्यव् इति जाते यदि हलि परतोऽपि गुणादेशस्तदा अमागमवकारयोरान्तरतम्याद् गुणे ओकारे "ओतो णिदिति वाच्यम्" इत्यनेन णिद्वद्भावे आदिवृद्धौ द्यौरिति सिद्धौ व्यर्थमौत्वविधानेन हलि परतो गुणाभावज्ञापनेन नाद्गुणार्थमप्यज्ग्रहणमिति । नच "ओतो णित्" इति वार्त्तिक-

व्याख्यानावसरे "विहितविशेषणाच्नेह हेभानो हे भानवः" इति ग्रन्थानुसारेण कथमत्रामागमविधाने द्यौरित्यत्र वृद्धिसिद्धिरिति "दिव औत्" एव विधेय इति न ज्ञापकता युक्तेति वाच्यम् ? "पुंसोऽसुङ्" इत्यत्रैव सौ विवक्षित एवामागविधानेन ज्ञापनसौकर्य्यात्। इति वाच्यम् ? "अकः सवर्णे" इत्युत्तरार्थमज्ग्रहणमिहैव कृतमिति व्याख्यानात्। अत एव कौमुदीकारेण तत्रैव अचि किं कुमारी शेते इत्यज्ग्रहणफलम्प्राकाशि किमधिकेन।

शेखरकारास्तु "इको यणचि, एचोऽयवायावः' वान्तो यि प्रत्यये" इति सूत्रत्रयम्परित्यज्य "इचोऽयणयवायाव" इति न्यासं विधाय "स्थानेऽन्तरतम" इति परिभाषयैव सकलेष्टसिद्धिमाहुः।

## तस्य लोप इति—

ननु "उपदेशेऽजनुनासिक" इति सूत्रात् इत्पदमनुवर्त्त्य षष्ठ्यन्ततया विपरिणामेन तदर्थलाभात् "तस्य लोप" इति सूत्रे तस्य ग्रहणं व्यर्थम्। नच "आदिर्ञिटुडव" इति सूत्रेणानेकालोऽपीत्संज्ञाया विधानेन "अलोऽन्त्यस्य" इति परिभाषयाऽन्त्यस्य लोपापत्तिः, तत्सत्त्वे तु तद्ग्रहणसामर्थ्यान्नालोऽन्त्यपरिभाषाप्रवृत्त्यापत्तिरिति वाच्यम् ? तथा सत्यपि "नानर्थकेऽलोन्त्यविधिरनभ्यासविकारे" इति परिभाषयैव सर्वलोपसम्भवात्। नच "नानर्थकेऽलोऽन्त्य" परिभाषाया भाष्ये प्रत्याख्यानात् कथम्प्रकृतार्थसिद्धिरिति वाच्यम् ? एवमपि प्रकृतेऽलोऽन्त्यपरिभाषाप्रवृत्तौ अन्त्यानाम् "उपदेशेऽज्" इति सूत्रेणैवेत्त्वसिद्धौ "आदिर्ञिटुडवः" इतिसूत्रारम्भसामर्थ्यान्नालोऽन्त्यपरिभाषाऽत्र प्रवर्त्तत इति ज्ञापनात्। नच "ट्वितोऽथुच्" इत्यादौ समुदितस्येत्संज्ञाविधानाय सूत्रञ्चरितार्थन्नालोऽन्त्यपरिभाषाया अप्रवृत्तौ ज्ञापकं भविष्यतीति वाच्यम् ? तथा सति "आदिर्ञिटुड्नाम्" इति कृत्वा न्यासमादीनामेतेनेत्त्वेम्, अन्त्यानाञ्च "उपदेशेऽज्" इत्यनेन, इति "ट्वितोऽथुच्" इत्यत्र ट् च उश्च टू तौ इतौ यस्येत्यर्थकरणेनासमुदितस्यापि (पार्थक्येनापि) इत्त्वविधानेनादोषात्। **इति चेदत्रोच्यते**—निरुक्तरीत्या डुकृञ् करणे इत्यादावपि पृथक् पृथगुकारादीनामित्त्वे उदित्त्वेन "उदितो वा" इति सूत्रेण कृत्वेत्यादि क्त्वायां वैकल्पिकेडागमापत्तेः।

नच "उदितो वा" इत्यत्र उच्चासौ इदिति कर्मधारयाङ्गीकारेण इदभिन्नोकारात्परस्य क्त्वो वेडित्यर्थेन प्रकृतेऽदोष इति वाच्यम् ? तथापि उविन्दिर् इत्यादि-

धातौ वैकल्पिकेट इष्टस्याप्यभावापत्तेः प्रत्येकमित्संज्ञाया अनौचित्येन सर्वलोपार्थं तस्यग्रहणस्यावश्यकत्वात् ।

पाणिनितन्त्रक्रोडपत्रकृतस्तु पूर्वसूत्रादित्पदस्य प्रथमान्तस्यैवानुवृत्त्या लाघवेन च इत् लुप्यते (लोपः कर्मघञन्तः) इत्यर्थकरणात् षष्ठीनिर्देशाभावेन नालोऽन्त्य-परिभाषाप्रवृत्तिसम्भव इत्यापत्तिविरहात् तस्य ग्रहणं सुत्यजमेवेत्युद्घोषयन्ति ।

शेखरकारास्तु पूर्वत्र संज्ञापरस्येत्पदस्येह संज्ञित्वसम्पादनाय तस्य ग्रहणमिति वर्णयन्ति । ते च "ष्णान्ताः षट्" इत्यत्र संख्यापदस्य संज्ञिपरत्वाय 'संज्ञाकरणाद-न्यत्रानुवर्त्तमानं संज्ञावाचकम्पदं संज्ञिपरम्' इति नियममाश्रयन्तः स्वयमेव तथा वक्तुमशक्ता इतिध्येयम् ।

## अदर्शनं लोपः—

ननु अत्र लोप इति पदम्पृथक्कृत्य "अदर्शनम्" इति विन्यस्य "उप-देशेऽच्" इत्यत इत्पदश्चानुवर्त्त्य प्रसक्तस्यादर्शनमित्संज्ञम्भवतीत्यर्थस्वीकारेणैव सिद्धौसर्वत्र लोपपदस्थाने इत्पदस्यैव कर्त्तव्यत्वादिति "तस्य लोपः" इति सूत्राकरण-रूपम्महालाघवमिति चेन्न ? तथा सति "णेरनिटि" इत्यात्रापीतोऽनुवृत्तौ णेरपीत्त्वे अचीकमत् इत्यादौ "इदितो नुम् धातोः" इति नुमापत्तेर्दुरुद्धरत्त्वात् ।

ये तु न्यासरत्नावलीकराः एवं विधे न्यासे "तस्य लोप" सूत्राभावे "ऋत इद्धातोः" इत्यनेन स्तीर्यादित्यत्र ऋकारस्य, बिभर्त्तीत्यादौ "भृञामित्" इत्यभ्यासस्य च लोपापत्तेर्नायं न्यास उचित इति वदन्ति । तन्न ? व्याख्यानेन तयोर्वर्णपरत्वा-ङ्गीकारेण लोपापत्तेरभावात् । अन्यथा सिद्धान्तेऽपि लोपापत्तिर्दुर्वारैव स्यात्, "अणुदित्सवर्णस्य" इत्यत्र विभिन्नविभक्तिकयोरपि संज्ञासंज्ञिभावदर्शनात् इति विभावयामः ।

## वान्तो यि प्रत्यये—

ननु अङ्गेन प्रत्ययाक्षेपात् तद्विशेषणत्वेन तदादिविधौ यादौ प्रत्यये परे ओदौ-तोरवावौ भवत इत्यर्थको "वान्तोय्यङ्गस्य" इत्येव न्यासोऽस्तु, तथैव गव्यादिसिद्धे-रिति वाच्यम् ? वासुदेववाचकात् "अकारो वासुदेवस्स्यादाकारस्तु पितामहः" इत्ये-काक्षरकोशानुकूलात् अशब्दात् तस्यापत्यम् इति विग्रहे "अत इञ्" इतिइञ्प्रत्यये "यस्येति" इत्याकारलोपे इरिति तस्यारिशब्देन षष्ठीतत्पुरुषे यणि यरिरिति पश्चाद् गोशब्देन समासे गोयरिरिति जाते स्थानिवद्भावेन इकारस्थानिकयकारे प्रत्ययत्व-

मादाय सिद्धान्ते वान्तादेशे गव्यरिरिति सिध्यति। इदानीञ्च यादिप्रत्ययनिमित्त-काङ्गत्वस्य गोशब्देऽभावेन वान्तादेशाभावापत्तेः। नच सिद्धान्तेऽपि वान्तादेशे विधातव्ये पदद्वयसम्बन्धिवर्णद्वयापेक्षयणो बहिरङ्गत्वेनासिद्धतया यादिप्रत्ययपरत्व-स्याभावाद् वान्तादेशो नाभीष्ट इति वाच्यम्? तादृशान्तरङ्गबहिरङ्गभावस्य भाष्या-सम्मतत्वात् "नाजानन्तर्य्ये" इति परिभाषया निषेधाद्वाऽदोषात् वान्तादेशेऽपि पदद्वयसम्बन्धिवर्णद्वयापेक्षत्वरूपबहिरङ्गत्वस्य सत्त्वाद् वा।

नच तथापि "भोभगो" इति सूत्रभाष्ये अल्निष्ठस्थानितासमानाधिकरणधर्मनि-मित्तके विधौ न स्थानिवदित्यर्थस्य "अनल्विधौ" इत्यस्य स्वीकारात् सिद्धान्तेऽपि इकारवृत्तिप्रत्ययत्वस्य यकारेऽतिदेष्टुमशक्यत्वात् प्रागपि न भवति वान्तादेश इदा-नीमपि च इति को दोष इति वाच्यम्? अशब्दादाचारक्विबन्तात् "अचो यत्" इति यति अकारलोपे गोशब्देन सम्बन्धे पूर्वं वान्तादेशो भवति, अल्लोपस्य स्थानिवत्त्वन्तु न? "न पदान्त" इतिनिषेधात्। इदानीं यत्प्रत्ययनिरूपिताङ्गत्वस्य गोशब्देऽभावाद् वान्तादेशानापत्तेरिति व्याख्यानाद् गव्यासिद्धेः।

नच सूत्रकृतौ "कास्प्रत्ययात्" इत्यत्र प्रत्ययग्रहणमपनीय "कास्यनेकाच-आम् वक्तव्य" इति वार्त्तिकं वार्त्तिककृता कृतमिति एकाज्भ्य आचारक्विपि सूत्रवा-र्त्तिककृतोः फलभेदप्रसङ्गवारणाय एकाज्भ्य आचारक्विपोऽनभिधानमिति सिद्धान्तान्न प्रकृते दोष इति वाच्यम्? लिटि एव तादृशानभिधानस्य विशेषतः कल्पनीयत्वात्। सामान्यापेक्षत्वे आगृहीते अशब्दात् "तत्र साधुः" इति यति अकारलोपे गोश-ब्देन समासे गव्ये वान्तादेशानापत्तेश्च। अत्राल्लोपस्य स्थानिवद्भाववारणं "न पदान्त" सूत्रेण, बहिरङ्गपरिभाषाया अप्रवृत्तिस्तु "नाजानन्तर्ये"इति निषेधाद् बोध्या।

येत्वत्र "आक्षिप्तस्य शाब्दबोधेऽभान"नियमं समाश्रित्य अङ्गाक्षिप्तप्रत्ययादे-शशाब्दबोधे भानासम्भवान्न्यास एवायन्दुष्टो न कर्तुं शक्यत इति वदन्ति, ते महा-नुभावाः "ल्यब्लोपे कर्मण्यधिकरणेच"ल्यबर्थो दृश्यते यत्र ल्यबन्तन्नैव दृश्यते। तदेव ल्यब्लोपित्वं ज्ञातव्यं हि सदा बुधैः" इति सिद्धान्तरीत्या प्रासादात् प्रेक्षते प्रासादमारुह्य प्रेक्षते इत्यर्थः इति "गम्यमानाऽपि क्रिया कारकविभक्तीनान्निमित्तम्" गम्यमानत्वञ्च स्ववाचकशब्दप्रयोगं विना बोध्यमानत्वम् इत्यादौ चाक्षिप्तस्य शाब्द-बोधे वैयाकरणैरपि भानाङ्गीकाराद् विचार्या एव।

ननु"यि प्रत्यये"इत्येव सूत्रमस्तु"एचोऽयवायाव"इत्यस्य सम्बन्धाद् यादौ प्रत्यये परे एचोऽयादय आदेशा भवन्तीत्यर्थस्वीकारेण वान्तादेशज्ञानाय पूर्वसूत्रपर्यालोचनस्यावश्यकतया वान्तादेशस्थानित्वेनौदौतोरेव निश्चयात्तयोरेव वान्तादेश इति लाभात्"स्थानेऽनन्तरतम उरण्रपर"इति संहितापाठीयसप्तम्यन्तपक्षे स्वानुरूपाःस्थानिनस्स्वस्वादेशैराक्षिप्यन्त इति लाभाद् वा तत्त्वनिश्चयाददोषात्। एवञ्च "ओदौतोरिति वक्तव्यम्"इति वार्त्तिकमपि तदर्थलाभायानुपयुक्तत्वान्नादरणीयमिति महल्लाघवम्।

यत्तु क्षेयं जेयमित्यादावपि प्रसङ्ग इति तन्न ? "क्षय्यजय्यौ शक्यार्थे"इत्यत्र क्षय्यजय्यौ इत्येको योगःशक्यार्थ इत्यपरः। पूर्वस्य"यि प्रत्यये"इत्येव सिद्धौ कण्ठतालव्यस्य चेद् भवति क्षिज्योरेवेति नियमार्थतया, द्वितीयस्य च क्षिज्योश्चेच्छक्यार्थ एवेति नियमार्थतया व्याख्यानेन च क्षेयमित्यादौ सर्वत्र दोषवारणसम्भवात्। रैशब्दस्य क्यजन्तस्य रूपन्नास्तीति कैयटोक्तेः"रायिच्छान्दस"इतिछन्दसिदृष्टानुविधानाच्च रैयतीत्यादौ न दोष इति ध्येयम्। अत एव च वान्तग्रहणं भाष्ये प्रत्याख्यातमिति न विस्मर्त्तव्यम्।

ननु"यि प्रत्यये"इत्यत्र"येन विधिस्तदन्तस्य"इति सूत्रेण यिविशेषणकप्रत्ययविशेष्यकतदन्तविधौ यान्ते प्रत्यय इत्येवार्थो युज्यते नतु यकारादाविति चेन्न ? तद्बाधक"यस्मिन्विधिस्तदादावल्ग्रहणे"इति परिभाषया तदर्थलाभसम्भवात। कस्तावत् परिभाषार्थ इति जिज्ञासायाम् यस्मिन्निति सप्तम्यन्तपदार्थकस्य स्वतन्त्रसर्वनाम्नो निर्देशः, सति सप्तमी नत्वधिकरणे ? "वान्तो यि"इत्यादौ तत्सम्भवेऽपि "नेड् वशिकृति"इत्यादौ तदसम्भवात्। अल्ग्रहणे इत्यत्र हि अल् गृह्यतेऽस्मिन्नित्यधिकरणल्युटा अल उच्चारणे इति नार्थः "तस्मान्नुडचि"इत्यादौ प्रत्याहारग्रहणे दोषापत्तेः "इकोऽचि व्यञ्जने माभूत्"इति भाष्ये व्यञ्जनादाविति विरोधापत्तेश्च। किन्तु बाहुलकात् करणे ल्युट् अल्प्रतिपादकशब्दे सतीत्यर्थः।तदादावित्यत्र तच्छब्देन सप्तम्यन्तार्थः परामर्शनीयः।एवञ्च सप्तम्यन्ते विशेषणीभूते अल्प्रतिपादकशब्दे सति यद् विधानम् तत्तदादौ बोध्यमित्यर्थः। अल्ग्रहण इति विशेषणस्यापि ग्रहणपदस्य"समुद्राभ्राद्घः"इति निर्देशेन पूर्वनिपातप्रकरणस्यानित्यत्वात् परनिपात इति। सप्तम्यन्तं विशेषणं वर्णरूपं तदादेः संज्ञेति फलितोऽर्थः। यस्मिन्नित्यंशानुपादाने च विशेष्यविशेषणभाववत्सु सर्वेषु तदादितदन्तविध्योः पर्यायेण प्रवृत्तिस्स्यात्।अल्ग्रहण इत्यं-

शानुपादेयत्वे च "ष्यङस्सम्प्रसारणम्" इत्यादौ पुत्राद्युत्तरपदयोस्सम्प्रसारणं स्यात्। उत्सर्गसमानदेशा अपवादा इति न्यायेन यथा "इको यणची" त्यादौ अजव्यवहित-पूर्वत्वविशिष्टस्येको यणित्यादौ विशेष्यविशेषणभावसत्त्वेऽपि अभेदसम्बन्धावच्छिन्न-प्रकारताप्रयोजके एव तदन्तविधिनियमेन दोषाभावस्तथेहापि अभेदसम्बन्धावच्छिन्न-प्रकारताप्रयोजकत्वेन सम्भाविते सति यत् कार्यन्तत् तदादौ बोध्यमित्यर्थो लभ्यते।

ननु "उत्सर्गसमासमानदेशा अपवादाः" इति न्याये किम्प्रमाणमिति चेच्छृणु? भाष्यकृता "असिद्धवत्" सूत्रम्प्रत्याचक्षाणेन एधीत्यत्र अस् हि इति स्थिते अकारस्य "श्नसोरल्लोप" इति लोपे सकारस्यैत्वे झषन्तत्वाभावाद् धित्वं न स्यादित्याशङ्क्य "एत्वं लोपापवादो विज्ञास्यते न च सकारस्य लोपः प्राप्नोति" इति प्रोक्तम्। न्याय-स्यास्यानाश्रयणे एत्वस्य लोपस्थान्यकारस्थानिकत्वासम्भवेन तदसङ्गतं स्यादिति न्यायस्वीकारे भाष्यमेव प्रमाणम्।

नच द्वितीयैकाज्द्विर्वचनस्य प्रथमैकाज्द्विर्वचनापवादत्वेऽपि तत्समानदेशत्वा-भावान्न्यायोऽयं व्यभिचरति इति वाच्यम्? उत्सर्गशास्त्रीयोद्देश्यतावच्छेदकाधिकर-णपर्याप्तोद्देश्यतावच्छेदककत्वं यत्रापवादशास्त्रे तद्विषयकत्वमस्य न्यायस्येति स्वीकृत्य उत्सर्गशास्त्रीयोद्देश्यतावच्छेदकप्रथमैकाच्त्वाधिकरणपर्याप्तत्वस्य द्वितीयैकाच्त्वेऽभा-वेन न्यायस्यास्य विषयत्वाभावाद् व्यभिचारासम्भवात्। फलञ्चास्य "छन्दसि क्न-मेके" इति असिक्नीत्यत्र तकारस्य क्नादेशसिद्धिः। अन्यथा क्नादेशस्यानेकाल्त्वेन सर्वादेशत्वापत्तिः। मम तु असितशब्दे तकारस्य नादेशः प्राप्तस्तद्बाधनाय "असि-तपलितयोर्न" इति वार्त्तिकम् तदपवादतयाऽयमपि नकारस्यैवेति वाच्यम्? तत्र-"छन्दसि क्नमेके" इत्यत्र "वर्णादनुदात्तात्" इत्यतः तकारग्रहणानुवृत्त्यैव सिद्धे न्यायस्यास्यानुपयोगात्। **इति चेदत्रोच्यते**—"स्पृशमृशकृषतृपदृपाञ्च्लेः सि-ज्वा वाच्यः" इति सिज्विकल्पःपौषादिकस्यैव, अङपवादत्वात्। तेनात्र तुदादौ नित्यं सिच् अतर्पीत् इति कौमुद्यामेव फलस्य स्पष्टप्रतिपत्तेः। तत्र सिज्विकल्पे तु अङि अतृपदित्यनिष्टमापद्येत। पुषधातोरग्रे दिवादावेव पठितो यस्तृप् तत्रैवाङि प्राप्ते तम् प्रबाध्य सिज्विकल्पः। तथा च दिवादौ रूपद्वयम्भवति परन्तु दोषोऽय-न्तौदादिके बोद्धव्य इति **पितृचरण**प्रसादात्।

ननु "यस्मिन्विधिस्तदादौ" इति परिभाषा न न्यायसिद्धा, न ज्ञापकसिद्धा न च वाचनिकीति कथं स्वीकार्येति चेन्न? परिभाषाया अस्या ज्ञापकसिद्धत्वोपगमात्।

तथा हि परिभाषाया अस्या अभावे "वान्तो यि प्रत्यये" इत्यस्य तदन्तविधिसहकारेण यकारान्ते प्रत्यये परे वान्तादेश इत्यर्थापत्त्या यान्तप्रत्ययासम्भवेन कुत्रापि चारितार्थ्यालाभेन वैयर्थ्यापत्तेः ज्ञापकत्वसम्भवात् । न च गोर्यरिर्गव्यरिरित्यादौ यान्तप्रत्ययसम्भवात्तत्र वान्तादेशाय सूत्रस्य चरितार्थतया न ज्ञापकत्वसम्भव इति वाच्यम् ? "वान्तो य्यङ्गस्य" इति न्यासखण्डनावसरे दर्शितेन अनल्विधावित्यस्य नवीनाभिमतार्थेन यकारे प्रत्ययत्वस्यैवालाभात् । न च "काम्यच" इति काम्यच्प्रत्यये गोकाम्याञ्चकारेत्यादौ यान्तप्रत्ययसम्भव इति वाच्यम् ? अल्लोपस्य स्थानिवत्वेन यान्तत्वासम्भवात् । परपदस्थाजादेशस्यैव च "न पदान्त" सूत्रेण स्थानिवत्त्वनिषेधविधानात् प्रकृते निषेधःस्थानिवद्भावस्य न शङ्कनीयः ।

ननु एवमपि गोमयमततीति गोमयात् तमाचष्टे गोमययतीत्यत्र यान्तप्रत्ययसम्भवेन सूत्रस्य चारितार्थ्यान्न ज्ञापकतासम्भवः । अज्झलादेशत्वाच्च न स्थानिवद्भावः, नाजानन्तर्य इति परिभाषया निषेधेन च न बहिरङ्गासिद्धत्वमिति चेन्न ? तथा सति तदन्तविधिसहकृतभान्तप्रत्ययासम्भवेन "अपोभि" इतिसूत्रस्यैव ज्ञापकत्वसम्भवात् ।

न च तत्र "भि" इति सप्तमी स्वतन्त्रैव न तु प्रत्ययविशेषणतापन्ना तथा च प्रत्याव्यवहितपूर्वस्य भकाराव्यवहितपूर्वस्यापस्तकार इत्येवार्थस्सम्भवति न तु भान्त इति येनासम्भवस्स्यात् । एवञ्च सूत्रस्यास्य वैयर्थ्याभावेन ज्ञापकत्वासम्भव इति वाच्यम् ? तथापि परिभाषाया अभावे "कोःकत्तत्पुरुषेऽचि" इतिसूत्रे अजन्तेत्यर्थापत्त्या तेनैव कद्रथ इत्यादिसिद्धौ तदर्थम् आरब्धस्य "रथवदयोश्च" इति सूत्रस्य वैयर्थ्येन परिभाषाया ज्ञापकत्वसम्भवात् । न च रथवदशब्दाभ्यामाचारक्विप्प्रत्ययान्ताभ्यां कर्त्तरि क्विप्यल्लोपे रत् वद् तयोः कुशब्देन समासे कदादेशार्थं सूत्रञ्चरितार्थम् "न पदान्त" इति निषेधात् स्थानिवत्त्वन्तु न भवति । नच तावन्मात्रप्रयोजनत्वे "रद्वदोश्च" इत्येव पठेत् किं "रथवदयोश्च" इतिपाठेनेति स सूत्रकृत्पाठो ज्ञापकस्स्यादिति वाच्यम् ? रम्धातोः क्विबन्ते रच्छब्दे वदधातोः क्विबन्ते वच्छब्दे च कदादेशापत्तिवारणाय अदन्तपाठस्य सूत्रकारकृतस्य आवश्यकत्वादिति वाच्यम् ? तथापि परिभाषाभावे "घुमास्था" इत्यस्य हलन्ते किन्ङित्प्रत्यये इत्यर्थात् प्रदायेत्यादावीत्त्वाप्राप्त्या आपद्यमानेत्त्वनिषेधकस्य "न ल्यपि" इति शास्त्रस्यैव व्यर्थीभूय तत्र ज्ञापकत्वसम्भवात् ।

नच प्रदायच्छत्रमित्यादौ तुकि हलन्तक्तिप्रत्ययस्य लाभेन तत्र प्राप्तस्येत्वस्य निषेधाय "नल्यपि"इति चरितार्थम्। नाजानन्तर्य इति निषेधात् तुको बहिरङ्गा-सिद्धत्वस्याप्यभावादिति न ज्ञापकत्वोपयोग इति वाच्यम् ? इदानीम् परिभाषाया अभावे "आतो लोप इटि च" इत्यस्य अजन्तयोरार्द्धधातुकयोः क्ङिदिटोः परयो-रातो लोप इत्यर्थस्यापि सम्भवात् तुकःपूर्वमेवातो लोपे ईत्वाप्राप्त्या पुनरपि निषेध-शास्त्रस्य "नल्यपि" इत्यस्य व्यर्थीभूय परिभाषायां ज्ञापकत्वसम्भवात् इत्यादिकं भूतिभसिते परिभाषेन्दुशेखरे विस्तरेण।

## धातोस्तन्निमित्तस्यैव—

"वान्तो यि" इति सिद्धे नियमार्थमिदं यादौ प्रत्यये धातोरेचश्चेदिति कौमुदी। नच तन्निमित्तस्यैचो वान्तादेशस्तर्हि धातोरेवेति विपरीतनियमस्यापि सम्भवेन "मधुबभ्र्वोर्ब्राह्मणकौशिकयोः" इत्यनेन यञि बाभ्रव्यमित्यादौ वान्तादेशः कथ-मिति वाच्यम् ? "पतिस्समास एव" इतिवत् सूत्रस्थैवकारस्य विपरीतनियमवार-कत्वात्।

ननु अत्र सूत्रे यादिपदार्थस्य क्वान्वयस्तन्निमित्तपदार्थे एच्पदार्थे वा ? आद्ये यादौ प्रत्यये यो धातुस्तद्घटको य एच् तस्य वान्तादेशश्चेत्तर्हि......इत्याद्यर्थे बुधधातोर्ण्यति बोध्यमित्यत्र वान्तादेशापत्तिः, अन्त्ये यकारादौ प्रत्यये य एच् स किम्भूतो धात्ववयवस्तस्य चेद् वान्तादेशस्तर्हि......इत्याद्यर्थे गामिच्छति गव्यती-त्यत्र वान्तादेशो न स्यादित्यतिव्याप्त्यव्याप्ती। तस्मादेचो विशेषणत्वम्, अवय-वत्वात्। धातोश्च विशेष्यत्वमवयवित्वात् इति "येन विधिस्तदन्तस्य"इति तदन्त-विधौ एजन्तधातोरित्यर्थे 'सम्भवव्यभिचाराभ्यां स्याद् विशेषणमर्थवत्' इत्युक्त्या यादिप्रत्ययाव्यवहितपूर्वत्वविशिष्टो यो धातुस्तदवयवो य एच् तस्य चेद् वान्तादेश-स्तर्हि तन्निमित्तस्यैवेत्यपूर्वकल्पना साम्प्रदायिकी।

ननु सूत्रस्यास्याभावे मूले ओयते इति दत्तदूषणस्य पदद्वयसम्बन्धिवर्णद्वयापेक्ष-गुणस्य बहिरङ्गतयाऽसिद्धत्वेन वान्तादेशापत्तिवारणेन औयत इत्येतदर्थञ्च "न य-कि" इति न्यासेनैव सिद्धौ किं "धातोस्तन्निमित्तस्यैव" इति सूत्रेणेति। नच गोश-ब्दादाचरक्विबन्तात् कर्तृक्विपि गोषु साधुरिति विग्रहे "तत्र साधुः" इति यति य-क्परत्वाभावेन निषेधाप्रवृत्त्या गोयमित्यत्र वान्तादेशापत्तिरिति। पूर्वन्तु यादिप्रत्यय-निमित्तकत्वाभावादेचो न भवतीति वाच्यम् ? "इको गुणवृद्धी" इत्यादि सूत्रीयम् "नैव

सन्ध्यक्षरमन्त्यमस्ति” इत्यादिभाष्यात् कास्प्रत्ययादितिसूत्रभाष्याच्च एकाज्भ्य आचारक्विपोऽनभिधानात्। अत एव शेखरकृताऽपि स्मृतो से इत्यादीनामनभिधानमुक्तम् इति चेन्न ? भूधातोः “अन्येभ्योऽपि दृश्यते” इति विचि तन्निमित्तकगुणे भोशब्दात् “तत्र साधुः” इति यति भोयमिति प्रयोगे, जनानवतीति जनौः ततः साध्वर्थे यति जनौयमित्यत्र च वान्तादेशापत्तेर्दुष्परिहरत्वात्। नच लोके विजेन्न दुर्लभ इति वाच्यम् ? कीलालप आगतमिति भाष्यप्रामाण्येन लोकेऽपि तत्सौलभ्यात्। सिद्धान्ते तु एचो यादिप्रत्ययनिमित्तकत्वाभावान्न दोष इति न्यासो न स्वीकार्यः।

केचित्तु यादौ क्विति यादौ तद्धिते न वान्तादेश इत्यर्थकं “अक्वित्तद्धितयोः” इति न्यासं वदन्ति। ते बाभ्रव्यम् गव्यति इत्यादावव्याप्त्यैव पराभवन्ति। एवमेव “न ति” इति न्यासे तकारेत्संज्ञके यादौ नेत्यर्थके औयत इत्यादावतिव्याप्तिः, “न त्किति” इति न्यासे तकारेत्संज्ञके ककारेत्संज्ञके च यादौ नेति च गव्यमित्यादेरसिद्धिप्रसङ्गाद् यथान्यासस्यैव रमणीयत्वात्। नच “कीलालप” इति भाष्यप्रयोगे विचःसाधुत्वेऽपि नान्यत्र तत्साधुता तथा च न भोयमित्यत्र दोषः। एवमेव जनौयमित्यत्र पदद्वयसम्बन्धिवर्णद्वयापेक्षवृद्धेरसिद्धत्वेन च न दोष इति “न यक्वि” इति न्यासोऽदुष्ट इति वाच्यम् ?‘उकारश्शङ्करः प्रोक्तः’ इति एकाक्षरकोशानुसारम् उश्शम्भुस्तमैच्छदौयत् इत्यत्र “न यक्वि” इत्येवं न्यासे वान्तादेशापत्तेः। सिद्धान्ते तु यादिप्रत्ययनिमित्तकत्वाभावान्न दोष इत्यलमधिकेन।

## उरण्रपर इति—

ननु ऋकारस्थाने योऽण् तस्य प्रसङ्गावस्थायां रगागम इत्यर्थकेन “उरणो रक्” इति न्यासेनैव सिद्धे परशब्दग्रहणाकरणरूपलाघवस्य विद्यमानत्वेन “उरण् रपरः” इति सूत्रं किमर्थम् इति चेन्न ? कृधातोर्यङ्लुकि चाकर्त्तीत्यादौ अभ्यासस्योरदत्त्वे तस्य रगागमे अभ्यासस्य कित्त्वेन “दीर्घोऽकितः” इतीष्टस्यापि दीर्घस्याभावप्रसंगात्।

परेतु जाहातीत्यादौ दीर्घसिद्धये अभ्यासावयवस्याकित इति नार्थः किन्तु समानाधिकरणविशेषणतयाऽभ्यासत्वावच्छिन्नोद्देश्यताककित एव तत्र ग्रहणमिति तदर्थे चाकर्त्तीत्यादावपि दोषविरहेण न्यासस्सुवच एवेति वदन्ति।

ननु “उरण् रपर” इति सूत्रम्मास्तु “अदेङ् गुण” इत्यत्र “अरेङ्गुणः” वृद्धि-

रादैजित्यत्र च "वृद्धिरारैच्" इति न्यासस्तथैव च कृष्णर्द्धिः प्रार्च्छतीत्यादिसिद्धेः। विधानसामर्थ्याच्च रेफस्य नेत्त्वमत एव "ऋकारस्य गुणवृद्धी अरारावेवेति" भाष्यमपि संगच्छते। नचैवम् यः सः इत्यादौ "त्यदादीनाम" इत्यादिकृताकारस्य गुणत्वाभावेन "अतो गुणे" इति पररूपानापत्तिः, शालादिशब्दाकारादेर्वृद्धिसंज्ञाभावेन "वृद्धिर्यस्याचाम्" इति वृद्धत्वाभावेन "वृद्धाच्छ" इति छप्रत्ययानापत्तिश्चेति वाच्यम्? तथा सति "अरदेङ्गुणः" वृद्धिरारादैच्" इति न्यासेन अकारस्य गुणसंज्ञाया आकारस्य वृद्धिसंज्ञाया अपि च सिद्धेः। "ऋत उत्" उदोष्ठ्यपूर्वस्य" इत्यादौ सर्वत्र तकारस्थाने रेफ एवोच्चार्यो नातः क्रोष्टुरित्यादौ दोषः।

नचैवम् राद्धान्ते "ऋत उत्" इत्यत्र तपरकरणेन भाव्यमानोऽप्युकारः सवर्णान् गृह्णाती'ति परिभाषा ज्ञाप्यते। इदानीन्तन्नोरिति पाठे सा कथमिति वाच्यम्? तथापि "दिव उत्" इतिसूत्रस्थतपरकरणस्यैव तज्ज्ञापकत्वसम्भवात्। नच तथापि निरुक्तरीत्या "भृञामित्" इत्यत्रापि "भृञामिर्" इति पाठे इरआदेशस्यानेकाल्त्वेन सर्वादेशत्वप्रसङ्ग इति वाच्यम्? तत्र कृतेऽपि रपरत्वे राद्धान्ते "हलादिश्शेषः" इत्यनेन लोपो भवत्येवेति फलाविशेषात् इदानीं "भृञामित्" इत्येवास्तु तत्र रपरत्वस्यानिष्टत्वाङ्गीकारादप्यदोषादिति **चेदत्रोच्यते**—ईर्त्सतीत्यर्थम् "आप्ज्ञप्यृधामीत्" इत्यनेन रेफविशिष्टविधानस्य "आप्ज्ञप्यृधामीर्" इत्यस्यावश्यकत्वेन बिधानसामर्थ्याद् रेफस्येत्संज्ञा नेति व्याख्यानस्याप्यवर्जनीयतया क्रोडीकारेण ईप्सतीत्यादावपि रेफश्रवणापत्तेर्दुर्वारत्वात्। तदर्थम् "आप्ज्ञपोरीत्, ऋध ईर्" इति न्यासे च लाघवानवकाशः प्राल्कारीयतीत्यादिसिद्ध्यर्थं वृद्ध्यादिसंज्ञाकरणे गौरवाच्च यथान्यासस्यैव रमणीयत्वात्।

अन्ये तु "उरण् रम्" इत्येव न्यासः उःस्थाने योऽण् तस्य प्रसङ्गावस्थायां रमागम इत्यर्थ इति वदन्ति ते विचिन्त्याः।

## एत्येधत्यूठ्सु इति—

ननु अवर्णाट्ठिति परे वृद्धिरेकादेश इत्यर्थकेन "ठिति च" इति न्यासेनैव सिद्धौ "एत्येधत्यूठ्सु" इति गुरुभूतन्यासःकिमर्थः। इण् गतावित्यत्र इठ् गताविति, एधवृद्धावित्यत्र च एधठ् वृद्धौ इति पाठादेव सिद्धेः। नच तथासति उपेत इत्यत्रापि वृद्ध्यापत्तिरिति वाच्यम्? "वृद्धिरेचि" इत्यत एचीत्यस्य सम्बन्धात् एजादौ ठितीत्यर्थेनादोषात्।

नचैवम् प्रष्ठौह इत्यत्र वृद्ध्यनापत्तिरिति वाच्यम् ? "वाह ऊठ्" इत्यस्य स्थाने "वाह ओठ्" इति न्यासेनादोषात्। नच तथा सति ओठ इक्त्वाभावेन प्रष्ठौह इत्यादौ तस्य सम्प्रसारणत्वाभावेन "सम्प्रसारणाच्च" इति पररूपानापत्तिरिति वाच्यम् ? "इग्यणस्सम्प्रसारणम्" इत्यत्र "इच् यणस्सम्प्रसारणमि"ति न्यासेन इच्प्रत्याहारे ओकारस्यापि ग्रहेणादोषात्। नच तथा सति वार्यूह इति न सिध्येदिति वाच्यम् ? असिद्धं बहिरङ्गमन्तरङ्गे इति परिभाषाज्ञापकमूड्ग्रहणमिति भाष्यप्रामाण्येन तादृशप्रयोगाणामनभिधानात्।

एवञ्च "ऊडिदम् पदादि" इति सूत्रे ओडिदमित्यादि पठनीयम् तथा च प्रष्ठौहादौ न शसादिविभक्तेरुदात्तस्वरानापत्तिः। नच यत्र यत्र ऊठिति पाठस्तत्र सर्वत्र ओडिति पाठे खौनातिइत्यत्र वृद्धिसिद्धये "च्छ्वोः" इति सूत्रेऽपि तथात्वापत्त्या अक्षद्यूरिति न सिद्धयेदिति तत एव "ज्वरत्वरेति" सूत्रेऽपि ओडित्यनुवृत्त्या जूरिति च न स्यादिति वाच्यम् ? ऊठः ठित्वसामर्थ्येन एजादित्वाभावेऽपि खौनातीत्यादौ वृद्धिसिद्धेः कल्पनस्यैवार्हणीयत्वात्। एवञ्च 'अन्ते रण्डा विवाहश्चेदादावेव कुतो नहि' इति न्यायेन प्रष्ठौहादावपि ठित्वसामर्थ्येनैव वृद्धेर्युक्तत्वात् न ओठादिन्यासानुधावनमिति पूर्वोक्ताः प्रायशो दोषा निवृत्ता एव। नच "ऊडिदम्" इत्यत्र विशेषणार्थत्वेन विश्वौह इत्यादौ स्वरार्थमूठः ठित्करणमिति वाच्यम् ? "वाह ऊठ्" सूत्रस्थभाष्यपर्यालोचनया अन्तरङ्गपरिभाषाज्ञापनपरभाष्यप्रामाण्येन प्रष्ठौहादौ "ऊडिदम्" इति स्वराप्रवृत्तेरेवेष्टत्वात्। अत एव च भगवता भाष्यकृता स्वरांशे दोषो न दत्त इति चेन्न ? अनेककल्पनाक्लेशापेक्षया यथास्थितपाणिनीयस्यैव श्रेयस्करत्वादित्यलम्।

## खरवसानयोर्विसर्जनीयः—

ननु पदान्तस्य रेफस्य विसर्गो भवति नत्वशि इत्यर्थकेन "विसर्गोऽनशि" इति न्यासेनैव सिद्धौ किमेतेन गुरुभूतसूत्रेणेति चेन्न ? तत्र "द्वौ नञौ तु समाख्यातौ पर्युदासप्रसज्ज्यकौ। पर्युदासस्सदृग्ग्राही प्रसज्यस्तु निषेधकृत्" इति नञोऽर्थद्वयोक्त्या यद्यत्र पर्युदासस्तर्हि अनशीत्यस्य अश्भिन्नेऽश्सदृशेऽल्येव प्रवृत्त्यापत्तौ अवसाने विसर्गानापत्तिः, प्रसज्ज्यप्रतिषेधत्वे च ज्ञानगौरवादस्य न्यासस्य त्याज्यत्वात्। नच "विसर्गः" इत्येवास्तु सूत्रम् अशि च यत्वविधानान्न दोष इति अनशीति मास्तु इति वाच्यम् ? प्रातरत्रेत्यादौ यत्वस्य रोरभावेनाप्राप्त्या रेफस्य विसर्गापत्तेरिति।

## एङः पदान्तादति—

अत्र शेखरकारैः पदान्तादिति किम् भवतीत्युक्तम् । तस्यायमाशयः, सूत्रेऽत्र पदान्तादित्यस्याभावे "एङोऽति" इत्येतावन्मात्रे कृते हरेः इत्यादावप्यनेनैव पररूपे सिद्धे तदर्थम् आरब्ध "ङसिङसोश्च" इति सूत्रस्य वैयर्थ्येन 'अपदान्तादेङः पूर्वरूपं चेत्तर्हि ङसिङसोरेव'इति नियमेन भवतीत्यादौ भो अति इति दशायाम् पूर्वरूपापत्तिर्नास्ति किमर्थम् पदान्तादितीति चेन्न? नियमस्य विशेषापेक्षतया अपदान्तादेङो विभक्तौ पूर्वरूपं चेत्तर्हि ङसिङसोरेवेति नियमापत्तौ हरय इत्यादौ दोषाभावेऽपि भवतीत्यत्र भो अ ति इति दशायां शपो "विभक्तिश्च" इति विभक्तिसंज्ञाभावेन तस्मिन् परे नियमाप्रवृत्त्या पूर्वरूपं स्यादिति दोषस्य जागरूकत्वादिति तात्पर्यवर्णनात् ।

न च "असति बाधके प्रमाणानां सामान्ये पक्षपातः" इतिन्यायेन "भवतेरः" इत्यादिनिर्देशेन च 'अपदान्तस्य चेदेङोऽति परे तर्हि ङसिङसोरेवाती'ति नियमशरीरस्य सामान्यमुखत्वेन न हरय इत्यादौ नापि च भवतीत्यत्र दोष इति किमर्थम् पदान्ताद्ग्रहणमिति वाच्यम्? तथा सति तद्ग्रहणस्य स्पष्टार्थत्वात्, "अवङ् स्फोटायनस्य" इत्यादावुत्तरत्रानुवृत्त्यर्थमावश्यकत्वाद् वा तत्करणात् ।

केचित्तु—अनुबन्धादौ चेत् पूर्वरूपं तर्हि ङसिङसोरेव इति "ङसिङसोश्च" इत्यनेन नियमात् भवति हरय इत्यादावदोष इति वदन्ति । तन्न? अचिनवम्, औपगवः, चयः इत्यादौ पूर्वरूपापत्तेः ।

येतु अपदान्तादेङः सुपि चेत् पूर्वरूपं तर्हि ङसिङसोरेवेति नियमसाजात्यात् हरय इत्यादौ पररूपापत्तिवारणेऽपि भवतीत्यादौ स्यादेव दोषः । एवञ्च हरय इत्यादिवारणमात्रप्रयोजनत्वे "ङसिङसोश्च" इत्यस्य स्थाने "न जसि" इत्येव सिद्धे गुरुभूतसूत्रकरणसामर्थ्यात् सामान्ये पक्षपात एवात्राभीष्टो न तु सजातीया(विशेषा)पेक्षत्वमिति सर्वत्र दोषाभावात् पदान्तग्रहणं व्यर्थमिति भणन्ति । तन्न? तथा सति सेशब्दाच्छसि सय इत्यादौ पूर्वरूपापत्तेः "न जसि" इति कल्पनायाः कर्त्तुमशक्यत्वात् । नच "नहि पदान्तादेङो रुरस्ति" इति भाष्यसिद्धान्तेन से इत्यादीनामनभिधानात् क्व दोष इति वाच्यम्?चय इत्यादौ दोषस्य वज्रायमाणत्वात् ।

परेतु "ङसिङसोश्च" इत्यस्य स्थाने "नाम्जश्शस्सु"इति न्यासं कृत्वा हरयः से अचिनवम् इत्यादौ दोषवारणं कुर्वते । तन्न?तथासति एशब्दादाचारक्विबन्ताल्लटि

झेरन्तादेशे अयन्ति, भूधातोर्भवन्ति इत्यादौ अन्तादेशघटकाकारस्य शपोऽकारेणै-कादेशे परादिवद्भावेन विभक्तिपरत्वमादाय न्यासे दोषस्य दुरुद्धरत्वात् न्यासापेक्षया पूर्वोक्तनियमे एव नागेशतात्पर्यादिति ।

## इकोऽसवर्णे शाकल्यस्य ह्रस्वश्च—

ननु "इको यणचि" इति सूत्रानन्तरम् "पदस्य शाकल्यस्य ह्रस्वश्च" इति पठित्वा इगन्तस्य पदस्याचि ह्रस्वो भवतीति तदर्थवर्णनेन ह्रस्वविधानसामर्थ्याच्च न यणादिकमिति दीक्षितानुकूलकल्पनेन च निर्वाहे "इकोऽसवर्णे" इति गुरूभूत-न्यासः पाणिनीयः किमर्थ इति । नचैवम् विनुहि इति इत्यादौ "ई चाक्रवर्मणस्य" इति कृतेऽप्लुतवत्त्वे नव्यस्यास्य न्यासस्य प्रवृत्त्या ह्रस्वे रूपद्वयासिद्धिरिति वाच्यम् ? "अप्लुतवदुपस्थिते, ई चाक्रवर्मणस्य" इत्यादीनाम् एतद्ह्रस्वविधायक-शास्त्रबाधकत्वसिद्धान्तेन ह्रस्वविधायकसूत्रार्थे 'इगन्तस्य पदस्य अनार्षेतिशब्दावय-वाजतिरिक्ताचि ह्रस्वः' इति सङ्कोचवर्णनेनादोषात् । नच शेखररीत्या पूर्वविप्रतिषे-धेन "अप्लुतवदुपस्थिते" इति सूत्रम् "ईचाक्रवर्मणस्य" इत्यस्य बाधकम् इति तेन नित्ये विधौ कथं रूपयद्वयसिद्धिरिति वाच्यम् ? यथान्यासे "अप्लुतवत्" इत्यत्र "इकोऽसवर्णे" सूत्रादसवर्णग्रहणमनुवर्त्य तस्य इति शब्दावयवासवर्णाचि प्रवृत्तिरिति वर्णनेन सवर्णाचि तदप्रवृत्त्या "ई चाक्रवर्मणस्य" इति विकल्पप्रवृत्तेर-प्रत्यूहत्वाद् रूपद्वयसिद्धावपायविरहात् ।

नचैवं न्यासे सूत्रे असवर्णग्रहणाभावे चक्रीह इत्यत्रापि प्रकृतिभावापत्तिरिति वाच्यम् ? "इको यणची"त्यनन्तरमस्य पाठ इति पूर्वं वर्णितत्वेन अस्मात् "अक-स्सवर्णे दीर्घ" इत्यस्य परत्वेन दीर्घविधायकेन तेन स्वप्रवृत्तियोग्यस्थले प्रकृतिभा-वस्य बाधकत्वेनादोषात् इति सर्वेऽपि गाथाकाराः । **अत्रेदमनुसन्धेयम्**—"पद-स्य शाकल्यस्य ह्रस्व" इतिन्यासेऽसवर्णग्रहणाकरणे "अप्लुतवत्" इत्यत्रासवर्णपदा-नुवृत्तिः कुतस्स्याद् येन "ई चाक्रवर्मणस्य"इति प्रवृत्त्या रूपद्वयं समर्थयिष्यत इति पाणिनीय एव श्रेयस्करो विभातीति गाथाकारा विचिन्तयन्तु ।

## न समासे, सिति च (वा०)

ननु पर्शुशब्दात् "पर्श्वा णस् वक्तव्यः" इति वार्त्तिकेन णसि णसयोरित्त्वे वृद्धौ पार्शु अ इति स्थिते प्राप्ताया अपि भसंज्ञायाः "सितिच"इति सूत्रेण बाधात् पद-

स्वविधानात् भसंज्ञाप्रयुक्तः "ओर्गुणः" न भवति। नच "इकोऽसवर्ण" इति प्रकृतिभाव एवास्तु इति वाच्यम् ? "सिति च"इति वार्तिकेन तन्निषेधात्। एवञ्च "इको यणचि"इति यणि पार्श्वम् इति सिध्यति इति राद्धान्तः।

ननु पार्श्वमिति रूपम् "पर्श्वा णस्" इति वार्त्तिकस्थाने "पर्श्वा ड्वण्"इति न्यासं कृत्वा डित्वाट्टिलोपेनैव साध्यतान्न तत्र "ओर्गुण"इतिगुणापत्तिर्नवा प्रकृतिभावापत्तिः सर्वशत्रोरुकारस्यैवाभावादिति पदसंज्ञाविधायकं "सिति च" इति सूत्रम् प्रकृतिभावनिषेधकं "सिति च"इति वार्त्तिकञ्च मास्तु इति चेन्न ? निरुक्तरीत्या "सिति च" इति सूत्राभावे पार्श्वमित्यत्र निर्वाहेऽपि "भवतष्ठक्छसौ" इति छस्प्रत्ययान्ते भवदीये पदत्वाभावेन जश्त्वाप्रवृत्त्या तदसिद्धेः सूत्रस्यावश्यं कर्त्तव्यत्वात्। एवमेव ऋतुप्राप्तावस्येति विग्रहे "छन्दसि घस्" इति सूत्रेण ऋतुशब्दाद्घसि इयि "सिति च" इति सूत्रेण पदत्वे "इकोऽसवर्ण" इति प्रकृतिभावे प्राप्ते "सिति च" इति वार्त्तिकसत्त्वे तन्निषेधात् इको यणि ऋत्विय इति राद्धान्ते सिद्धयति। वार्त्तिकाभावे तन्न सिध्येदिति "सिति च" इति वार्त्तिकस्याप्यवश्यमादरः।

नच "पर्श्वा ड्वण् वक्तव्य" इति न्यासे पर्शुशब्दादाचक्षाणणिजन्तात् विचि पर्श इति तत एकदेशविकृतन्यायेन पूर्वं णसि पार्शमिति भवति, इदानीं ड्वणि पार्श्वमिति फलभेदात् ( रूपभेदात् ) न्यासोऽयन्न कर्त्तुं शक्य इति पार्श्वसिद्धये "सिति च" इति वार्त्तिकस्यावश्यकता, एवम् "छन्दसि घस्" इत्यस्य स्थाने "छन्दसि ड्विय" इति न्यासेन, "इकोऽसवर्ण" इत्यस्य वैकल्पिकत्वेन छन्दसि दृष्टानुविधित्वेन वा ऋत्विय इत्यस्यापि सिद्धेर्निर्बाधतया "सिति च" इतिसूत्रस्य नावश्यकतेति वाच्यम् ? भवदीय इति दत्तदोषेण सूत्रस्य अत्यन्तमावश्यकत्वात्।

नच तथापि वार्त्तिकखण्डनखण्डनं यथास्थितमिति वाच्यम् ? गोधाशब्दस्य दीर्घान्तत्वेन "गोधाया ढ्रक्, रगुदीचाम्" इति रग्विधानेनैव गौधार इत्यादीनां सिद्धेः "आरगुदीचाम्"इत्यत्र आकारोच्चारणमन्यतो विधानार्थम्। तेन जडशब्दात् जाडार इति पण्डशब्दाच्च पाण्डार इति सिध्यतीति कौमुदीमूले तद्धितः। भवदीयसंवर्णितरीत्या यथा पर्शुशब्दादाचक्षाणणिजन्तात् विजन्तम्पार्श इति ड्वण्न्यासे रूपवैषम्यन्दर्शितम् तथा गोधाशब्दादपि तादृशप्रकारैर्निष्पन्नगोध् इति हलन्तात् यदि आरक् तदा गौधार इति यदा रक् इतिन्यासः क्रियते तदा गौध्रः इति फलभेदस्य गोधाशब्दे एव सत्त्वेन तादृशहलन्तगोध्शब्दार्थमाकारोच्चारणमित्यनभिधाय जाडा-

राद्यर्थमिति ब्रुवतो भगवतो भाष्यकारस्य हृदि प्रातिपदिकप्रकृतिकण्यन्तप्रकृतिकविजन्तात् तद्धितीयो नेष्ट इत्यवश्यं वर्त्तमानं तात्पर्यमवगन्तव्यम् । तथाच पार्श्व इत्यस्यापि तादृशभाष्यप्रामाण्येनानभिधानात् "पर्श्वा ङ्वण्" इति न्यासे दोषाभावेन वार्त्तिकस्य "सिति च" इत्यस्याकर्त्तव्यत्वात् । **इतिचेदत्रोच्यते**—तादृशभाष्यज्ञापनस्य सजातीयापेक्षत्वेन आबन्तप्रातिपदिकप्रकृतिकण्यन्तप्रकृतिकविजन्तानभिधानस्यैव तात्पर्यात् दोषसम्भवेन वार्त्तिकस्यापि अवश्यं कर्त्तव्यत्वात् ।

नच "सिति च" न समासे" इति वार्त्तिकद्वयम्परित्यज्य तत्स्थाने "वृत्तौ न" इति मात्रेण वाप्यश्व इत्यत्र समासवृत्तेः पार्श्वमित्यत्र च तद्धितवृत्तेस्सत्त्वेनोभयत्र प्रकृतिभावनिषेधसिद्धेः वृत्तयश्च कृत्तद्धितसमासैकशेषसनाद्यन्तधातुरूपाः पञ्चेति स्मरणादिति वाच्यम् ? दध्युपपीडम्भुंक्ते इत्यादौ "सप्तम्यां चोपपीडरुधकर्षः" इति सूत्रेण उपपूर्वेभ्यः पीडादिभ्यः सप्तम्यन्ते तृतीयान्ते चोपपदे णमुल् इत्यर्थकेन णमुलि उपपदसंज्ञायां "तृतीयाप्रभृतीन्यन्यतरस्याम्" इति वैकल्पिकसमासे समासपक्षे इष्टस्य प्रकृतिभावनिषेधस्य "वृत्तौ न" इति सिद्धावपि समासविकल्पपक्षेऽपि कृत्प्रत्ययस्य णमुलस्सत्त्वेन कृद्वृत्तिमादाय "वृत्तौ न" इति प्रवृत्त्या प्रकृतिभावनिषेधे यथा समासपक्षे यण् तथेदानीमपि इति रूपसाम्यात् ( दध्युपपीडम् दधि उपपीडम् इति ) इष्टस्यापि रूपद्वयस्याभावापत्तेरिति यथावार्तिककारीयमेव श्रेयस्करमिति समाधानात् । एतेन तत्र "अमैवाव्ययेन" इति नित्यसमासस्यैवेष्टत्वात् एकमेव रूपं यण्विशिष्टमेवेष्टं सैद्धान्तिकैरिति परास्तम् । कौमुद्यामेव "तृतीयाप्रभृ" इति विकल्पविधायकस्यैतदर्थमेवावतारादिति ।

## मय उञो वो वेति—

ननु मयः परस्य उञो यण् वा इत्यर्थकः "मय उञो वा" इति न्यास एव "इको यणचि" इत्यस्यानन्तरं क्रियतां किं व इत्यस्य ग्रहणेनेति । नच तथा सति किम्वुक्तम् इत्यत्र "मोऽनुस्वारः" इत्यनुस्वारापत्तिः राद्धान्ते तु वत्वस्यानुस्वारदृष्ट्याऽसिद्धत्वेन नानुस्वार इति वाच्यम् ? तथा पाठेऽपि वत्वस्य पदत्रयसम्बन्धिवर्णापेक्षत्वेन बहिरङ्गतयाऽसिद्धत्वात् "अचः परस्मिन्" इति स्थानिवद्भावाद् वाऽनुस्वाराप्रवृत्तेर्वक्तुं शक्यत्वात् । इति चेन्न? षाष्ठी बहिरङ्गपरिभाषा "वाह ऊठ्" सूत्रज्ञापिता त्रिपाद्यान्न प्रवर्त्तत इति शेखरसिद्धान्तेन बहिरङ्गपरिभाषाया अनुस्वार-

विषयेऽप्रवृत्तेः, स्थानिवद्भावस्य च "न पदान्त" इति निषेधादनुस्वारापत्तेरशक्य-परिहारत्वात् ।

नच सन्निपातपरिभाषया वारणं शक्यम् ? राद्धान्ते "मय उञ" इत्यस्य यथा स्थितत्वे प्रत्यङ् उ आत्मेत्यत्र "मय उञ" इतिवत्वे तस्यासिद्धतया "ङमो ह्रस्वात्" इति ङमुटि प्रत्यङ्ङ्वात्मा इति भवति इदानीं वत्वविधायकस्य "इको यणचि" इत्यस्यानन्तरम्पाठे ङमुड्दृष्ट्या सापादिकत्वेनासिद्धत्वाभावात् ङमुडनापत्तिरिति दोषस्य जागरूकत्वात् । नच प्राचीनानान्नये त्रिपाद्यामपि बहिरङ्गपरिभाषाप्रवृत्ति-स्वीकाराद् वत्वे ( यणि ) अपि ङमुद् सिध्यतीति वाच्यम् ? षष् उ आसन्नेत्यत्र स्थितौ जश्त्वेन षकारस्य डकारे राद्धान्ते उञो वत्वे षड्वासन्ना इति जायते । इदानीं "मय उञ" इत्यस्य सापादिकतया तद्दृष्ट्या जश्त्वस्याद्धित्वेन मयः परत्वाभावेन वादेशो नैव स्यादित्यापत्तेर्वज्रलेपत्वात् । एवञ्च यथास्थानम्पाणिनिपाठ एव श्रेयानिति ।

## स्तोः श्चुना श्चुरिति—

ननु स्तोः शकारचवर्गाभ्यां योगे शकारचवर्गौ स्त इति द्रविडप्राणायामापेक्षया लाघवात् सकारतवर्गयोश्शकारचवर्गौ भवतः शकारचवर्गयोः परयोरित्यर्थकः "स्तोः श्चौ श्चुः" इति न्यास एवास्तु । नच श्चौ इति सप्तमीं दृष्ट्वा "तस्मिन्निति निर्दिष्टे" इति परिभाषयाऽव्यवहितपूर्वत्वांशोपस्थित्या शकारचवर्गाव्यवहितपूर्वत्वविशिष्टयोः सकारतवर्गयोः शकारचवर्गौ भवत इत्यर्थापत्त्या यजधातोः "यजयाच् यत विच्छ-प्रच्छरक्षो नङ्" इति कृदन्तीयनङि ङस्येत्वे राद्धान्ते श्चुत्वविधायकेनेष्टमपि नकारस्य ञत्वमिदानीन्न स्यात् तवर्गस्य (नकारस्य) शकारचवर्गाव्यवहितपूर्वत्वाभावात् प्रत्युत अव्यवहितपरत्वस्यैव सत्त्वादिति वाच्यम् ? तथा सति विश्न इत्यादावपि तद्गतेरेवोपस्थितत्वात् श्चुत्वाप्राप्त्या "शात्" इति निषेधकेन व्यर्थीभूय इह तस्मिन्निति-परिभाषयाऽव्यवहितत्वांशमात्रोपस्थितिः पूर्वत्वांशश्च नोपतिष्ठते इति ज्ञापनेनाव्यवहितपरस्यापि नकारादेःश्चुत्वे बाधाभावात् । तादृश "शात्" इति शास्त्रवैयर्थ्येन तत्परिभाषाप्रयुक्तम् अव्यवहितत्वम् पूर्वत्वम् वा किमपि नोपतिष्ठत इति तु न ज्ञापयितुं शक्यतेऽन्यथा चितमित्यादावपि चुत्वापत्तेः । इति चेन्न, तथाविधसामर्थ्याद्याश्रयणे ज्ञानगौरवाद् यथास्थितस्यैव सम्यक्त्वात् । अत्रेदमवश्यमालोच्यतां

यत् स्थान्यादेशयोर्यथासंख्यम्, निमित्तकार्यिणोस्तु न, अन्यथा शकारयोगे सकारस्य, चवर्गयोगे च तवर्गस्य इत्यर्थे "शात्" इत्यस्य वैयर्थ्यन्ध्रुवं स्यात्।

## यरोऽनुनासिकेऽनुनासिकः—

ननु अत्र लाघवात् "यरो ञमि ञम् वा" इत्येव न्यास आस्तां किं गौरवेण। नच "यथासंख्यमनुदेश" इति सूत्रप्रवृत्त्या एतन्मुरारिः इत्यत्र दस्य मकारापत्तिरिति वाच्यम्? "आन्महतः समानाधिकरणजातीयदेशोययोः" इति निर्देशेन यथासंख्यसूत्रस्येहाप्रवृत्तिकल्पनेनादोषादिति चेन्न? एतनूं इति कमलाँश्चिनोषीत्यादौ अनुनासिकानापत्तेः। नच विधेयबोधकानुनासिकःइत्यस्य स्थाने ञमिति पठ्यतां शिष्टं च सूत्रं यथास्थितमेवास्त्विति वाच्यम्?कमलाँश्चिनोषीत्यत्र दोषस्य तदवस्थत्वात्। नच तदपेक्षया यम् इत्येव पठयतां को दोष इति वाच्यम्? विधीयमानेऽणुदित्सूत्राप्रवृत्त्या सवर्णग्रहणाप्रसक्त्याऽनुनासिकलकाराप्राप्तेस्तस्यैव दोषस्य पुनरनुद्धारादिति। व्याख्यातश्चैतत्सर्वमपि "मुखनासिकावचन" इति सूत्रे।

## मोऽनुस्वार इति—

"पदस्य ८।१।१६" इत्यधिकारसूत्रम् "अपदान्तस्य मूर्धन्यः ८।३।५५" इतिसूत्रपर्यन्तम्प्रचलति। अत एव लिहौ दुहौ इत्यादौ न ढत्वघत्वे। ननु "मोऽनुस्वार"इति सूत्रे "पदस्य" इत्यस्यासम्बन्धेऽपि दोषाभावेन किमर्थन्तत्सम्बन्ध इति चेन्न? तथा सति मान्तस्यानुस्वारो हलि इत्येतावन्मात्रे गम्यते इत्यत्राप्यनुस्वारापत्तेः। नचैवम् अपदान्तेऽप्यनुस्वारसिद्धौ "नश्चापदान्तस्य"इत्यांशिकवैयर्थ्येन अपदान्तस्य मस्य चेदनुस्वारस्तर्हि झल्येवेति नियमाद् गम्यत इत्यादौ झल्परत्वाभावेन दोषाभाव इति वाच्यम्? विनिगमनाविरहेण झलि मस्य चेदनुस्वारस्तर्हि अपदान्तस्यैवेति विपरीतनियमस्यापि सम्भवेन हरिंसेवते इत्यत्र (अव्याप्त्यापत्तेः) अनुस्वारानात्तेः। नच तथा विपरीतनियमसम्भवे "हे मपरे वा" इत्यस्य वैयर्थ्यं किं ह्मलयतीत्यादावनुस्वाराप्राप्तेरिति तत्सामर्थ्यान्न विपरीतनियम इति वाच्यम्? प्रशाम् ह्मलयतीत्यत्र"मो नो धातोः" इति प्राप्तनत्वस्य वारणाय "हे मपरे" इत्यस्य चारितार्थ्यात्। नच विपरीतनियमे "मो राजि सम" इति सूत्रवैयर्थ्यं सम्राडित्यत्रानुस्वारस्याप्राप्तत्वादिति वाच्यम्? सम्धातोर्विजन्तनिष्पन्नसम्शब्देन राडित्यस्य समासे सम्राडित्यत्र "मो नो धातोः" इति प्राप्तनत्वबाधनाय तच्चारितार्थ्यात्।

नच "मो नो धातोः"इत्यनन्तरमेव "हे मपरे वा, नपरे नः" इत्यनयोः पाठ-करणेन नग्रहणाकरणरूपलाघवस्य सत्त्वेन "मो राजि"इति प्रकरणे पाठारम्भो विपरीतनियमं वारयिष्यतीति वाच्यम् ? गिरिवेशम् झलयतीत्यत्र मकारस्य संयो-गान्तलोपवारणाय तत्प्रकरणे पाठस्य चारितार्थ्यात् । नच संयोगान्तलोपम्प्रत्यस्या-सिद्धत्वेन कथन्तत्प्रयोजनप्रदर्शनमिति वाच्यम् ? अपवादशास्त्रस्यासिद्धतायाः कु-त्राप्यदृष्टत्वात् । नच "संयोगान्तस्य झलो लोपविधानात्"इति "यणःप्रतिषेध"वा-र्त्तिकप्रत्याख्यानकालिकभाष्यसिद्धान्तात् मकारस्याझल्त्वेन संयोगान्तलोपाप्राप्त्याऽ-थाप्यसङ्गतिरिति वाच्यम् ? गिरिवेडित्यादिसिद्धये वाक्यभेदेन क्वचिदझलोऽपि लोप-सिद्धान्तस्य टीकाग्रन्थेषु दर्शितप्रायत्वात् ।

## समस्सुटि—

ननु अत्र"मःसुटि"इत्येव न्यास आस्तां सुटि समो मकारस्यैव लाभाददोषा-ल्लाघवात् । न च सम्ग्रहणसत्त्वे समः परस्य सुडागमस्यैव लाभ इति प्राग्वर्णित-त्वात् सुडागमस्यैव ग्रहणम् भवति राद्धान्ते, इदानीं सुट्प्रत्याहारस्य सुट्शब्दस्य वा ग्रहणापत्तिः कथं वार्येति वाच्यम् ? "संस्कृतम्भक्षाः" इति निर्देशेन तथापि सुडागमस्यैव ग्रहेणादोषात् । अत एव सम् सुट् इत्यादिवाक्ये न रुत्वमिति चेन्न ? सर्वनाम्नः समशब्दाद् "अव्ययसर्वनाम्नामकच् प्राक् टेः" इत्यकचि सकमशब्दा-दाचक्षाणणिजन्तात् क्विपि टिलोपणिलोपादिषु सक् इत्यस्याग्रे स्कर्त्तेति योजने सक् स्कर्त्ता इत्यत्र सत्यामपि संहितायां विवक्षितायाम् "मः सुटि" इत्यनेन रुत्वाना-पत्तेः । राद्धान्ते तु"तन्मध्ये पतितस्तद्ग्रहणेन गृह्यते" इति न्यायेन सम्ग्रहणेन सकमो ग्रहणस्येष्टत्वादिति दोषस्य जागरूकत्वात् ।

रत्नकारास्तु उपस्कारशब्दे"विनाऽपि प्रत्ययम् पूर्वोत्तरपदयोर्लोपो वा वाच्यः" इति उपशब्दलोपे किं स्कार इत्यत्र रुत्वापत्तिरेवात्र न्यासे नव्ये दोषः । भाष्यादौ "निमित्तापाये नैमित्तिकस्याप्यपायः" इति न्यायस्यादर्शनात् उपशब्दलोपे सुटोऽपि तन्निमित्तीकृत्य जायमानस्यापहारे नास्य विषयतेति परास्तम् ।

नच भवता "संस्कृतम्भक्षाः"इति निर्देशेन सुट्पदेन सुडागमग्रहणं कृत्वा "समः सुटि" इत्यत्र सम्ग्रहणं खण्डितन्तत्तु न युज्यते, सूत्रनिर्देशेन सूत्रावयवख-ण्डनस्यायोग्यत्वात् । अन्यथा सर्वेषामित्यादिनिर्देशैरेव झल्येत्वज्ञानाद् "बहुवचने"

इत्यादिसूत्राणां वैयर्थ्यं ध्रुवमितिवाच्यम् ? कुत्रचित् "अणृगयनादिभ्य" इत्यत्र ऋगयनेति निर्देशेन गकारव्यवधाने णत्वन्न भवतीति निश्चित्य "पूर्वपदात्संज्ञायामगः" इति सूत्रे अग इति प्रत्याख्येयमिति भाष्यावलोकनेन सूत्रनिर्देशेन सूत्रावयवखण्डनस्य सर्वथा अयुक्तत्वकल्पनासम्भवात्।

वस्तुतस्तु "मः सुटि" इत्यत्र न सूत्रनिर्देशेन सूत्रावयवः खण्डयते किन्तु निर्देशेन सुडागममात्रस्य ग्रहणमिति निश्चीयते खण्डनन्तु सग्रहणस्य लाघवमूलकमेवेति आक्षिप्तन्तत् कैश्चित् प्रसङ्गाद् व्याख्येयम्।

## शपेरे विसर्जनीय इति —

ननु शर्परे खरि विसर्गस्य सत्वं नेत्यर्थकः "शर्परे न" इत्येवास्तु न्यासः तथैव वासः क्षौमम् इत्यादौ प्राप्तसत्वनिषेधसिद्धेरिति चेन्न ? साम्प्रतं "कुप्वो≍क≍पौ च" इति चकारेण सत्वनिषेधकनेत्यस्यैवानुकर्षणात् अद्भिः प्सातमित्यादौ सत्वनिषेधेऽपि≍पाद्यादेशापत्तेरनिवार्यत्वात्।

राद्धान्ते तु विसर्जनीयपदेन विकारमात्रं ( सत्वं वा≍पादिकं वा ) सर्वमपि बाध्यते इति न दोषः। इति चेन्न ? "कुप्वो≍क≍पौ च" इत्यत्र "शर्परे न" इति पूर्णस्यानुवृत्तौ शर्परयोः कुप्वोः≍क≍पौ नेत्यर्थे वासः क्षौमम् इत्यादौ≍क≍पयोर्निषेधात्।

केचित्तु "शर्परे विसर्जनीयः" इत्येतत्सूत्राविषयत्वात् "कुप्वोः" इत्यस्य न दोष इत्यभिदधति। अत एव क≍करोतीत्यादौ सत्वदृष्ट्या जिह्वामूलीयस्यासिद्धत्वात् सत्वं नेति शब्दरत्नकाराः।

नन्वेवमपि "विसर्जनीयस्य सोऽशर्परे" इत्येवास्तु न्यासः "विसर्जनीयस्य सः, शर्परे विसर्जनीयः" इति सूत्रद्वयञ्च कार्यम् इति चेन्न ? "वा शरि" इत्यनेन सत्वस्य विकल्पेन सिद्धावपि "कुप्वोः" इत्यत्राशर्पर इत्यनुवृत्त्या तयोः शर्परेऽप्रवृत्तावपि "कुप्वोः" इति सूत्रे चाद् विसर्गालाभेन कः करोतीत्यादौ पक्षे सत्वापत्तेः इति शब्दरत्नकाराः।

अपरे तु "विसर्जनीयस्य" इत्यनुवर्त्य तच्चावर्त्य "कुप्वोः" इति सूत्रे≍क≍पाविति प्रथमान्तपदसाहचर्येण प्रथमान्तत्वेन विपरिणम्य चाद् विसर्गार्थस्य सौलभ्येन न्यासे दोषोऽन्वेषणीय इति वदन्ति।

## सोऽपदादौ—

ननु अत्र "सः प्रत्यये" इति न्यास एवास्तु कुप्वोरित्यनुवर्त्य तदादिविधौ कवर्गादौ पवर्गादौ च प्रत्यये परे सत्वमित्यर्थेन पयस्पाशमित्यादिसर्वेष्टसिद्धेः। नच उरःकायतीति विग्रहे "गतिकारकोपपदानां कृद्भिस्सह समासवचनं प्राक् सुबुत्पत्तेः" इति विशेषपरिभाषया सुबुत्पत्तेः प्राक् समासे उरस्क इत्यादौ अपदादिकवर्गपरत्वेन प्रागभिमतमपि सत्वमिदानीं कवर्गादिप्रत्ययपरत्वाभावेन नैव स्यादिति वाच्यम्? राद्धान्तेऽपि तत्र सत्वस्यानिष्टत्वात्। तथा हि "सोऽपदे" इति विन्यस्य यस्मिन्विधिरिति परिभाषयैव तदादित्वे लब्धे कवर्गादावपदे इत्यर्थेन सिद्धे आदिग्रहणसामर्थ्येन अपदस्यैवादिरित्यवधारणार्थकत्वविशिष्टसमासलाभः। तेन च पदपरपदत्वयोग्यप्रातिपदिकपरन्ततश्च प्रकृते कपदस्य प्रातिपदिकतया सिद्धान्तेऽपि न सत्वमिति शब्दरत्नोक्तेः। **इति चेदत्रोच्यते**—उरःकाम्यजस्तीत्यादौ काम्यचप्रत्ययानुकरणस्थले "प्रकृतिवदनुकरणं भवति" इति सिद्धान्तातिदेशबलेन सामासिकपदत्वस्य प्रत्ययत्वस्य च समानयनात् सत्वापत्तेः प्राक् च अपदादिकवर्गपरत्वाभावेन तन्नेति विवरणात्।

नच "सः प्रत्यये" इति न्यासे "यस्मात्प्रत्ययविधिः" इति तदादेरुपस्थित्या विसर्गान्ततदादेर्विसर्गस्य सत्वं स्यात् कवर्गादिप्रत्यये इत्यर्थाश्रयणेन न दोष उरश्शब्दस्य तदादित्वाभावादिति वाच्यम्? एवं सति उत्तरसूत्रे"इणः ष"इत्यत्र इणः परस्य विसर्गान्तस्य तदादेः षत्वमित्यर्थापत्तौ दधिसर्पिष्पाशमित्यत्र षत्वसिद्धावपि सर्पिष्पाशमित्यादौ षत्वानापत्तेः। राद्धान्ते तु इदुदुपधस्य पदस्यावयवो यःसकारस्तस्यैत्याद्यर्थादिति नोक्तदोषः।

केचित्तु न्यासरत्नावलीकाराः "श्रुतानुमितयोः श्रुतसम्बन्धो बलीयान्" इति परिभाषया श्रुतत्वात् इणः इति विसर्गविशेषणमिति इणःपरविसर्गान्ततदादेरित्यर्थाङ्गीकारेणोक्तदोषवारणे तु काम्यजलौकिकप्रक्रियावाक्यघटकप्रकृतिप्रत्यययोः प्रत्येकानुकरणे तत्त्वसत्त्वेन तत्र दोषाच्चेत्यलम्।

## द्विस्त्रिश्चतुरिति—

अत्र लाघवात् "सुचः" इत्येव सूत्रणीयमिति नागेशाः। नच तथा न्यासे सुच प्रत्ययत्वात् "प्रत्ययग्रहणे यस्मात्स विहितस्तदादेस्तदन्तस्य च ग्रहणम्" इति परिभाषया सुजन्ततदादेरित्यर्थलाभे द्विष्करोतीत्यादौ षत्वसिद्धावपि परमद्विष्करोतीत्य

न स्यादिति वाच्यम् ? यथा "वनो र च" इत्यत्र वारद्वयन्तदन्तविधिस्तथेहापि पदस्येति धर्म्यन्तरसत्त्वेऽपि तदादीति धर्म्युपतिष्ठत एवेति "नित्यं समासे" इति सूत्रेऽनुत्तरपदस्थग्रहणेन द्विस्तदन्तविधिसिद्धान्तस्य "इसुसोस्सामर्थ्ये" इति सूत्रोक्तदिशा इहाप्याश्रयणेनादोषात् । नच "सुच" इत्यस्य त्रिष्करोतीत्यादौ चारितार्थ्येन चतुष्करोतीत्यादावसिद्धत्वेऽपि "इदुदुपधस्य" इति नित्यषत्वापत्तिः । राद्धान्ते तु "द्विस्त्रिश्चतुरिति" पाणिनीयसूत्रसत्त्वे चतुरित्यस्य विशेषविहितत्वेन तन्नित्यषत्वापेक्षयाऽस्यापवादत्वान्न दोष इति वाच्यम् ? सुच्प्रत्ययविधायक "द्वित्रिचतुर्भ्यस्सुच्" इत्यस्य स्थाने "द्वित्रिभ्यां सुच्चतुरो लोपश्च" इति विन्यस्य चतुर्शब्दीयरेफस्य लोपात् सुच एव विसर्ग इति "अप्रत्ययस्येति"निषेधांशप्रवृत्त्या "इदुदुपध" इति नित्यषत्वाभावस्य सुसाधत्वात् ।

केचित्तु "कस्कादिषु च" इत्यत्र कस्कादिगणे भ्रातुष्पुत्रशब्दस्य पाठात् लोपनिमित्तरेफस्थानिकविसर्गस्य "इदुदुपधस्य" इति षत्वन्न भवतीति ज्ञापनेन न चतुष्करोतीत्यादौ नित्यषत्वप्राप्तिरिति वदन्ति ।

उच्छृङ्खलास्तु "सुच" इति नित्यषत्वविधायकात् "इदुदुपध" सूत्रात् प्रागेव पठनीयमिति न दोषलेशोऽपीति वक्तुम्प्रभवन्ति ।

येतु त्रिष्करोतीत्यादौ "इसुसोःसामर्थ्ये" इत्येव षत्वसिद्धौ "सुचः" इत्यस्य वैयर्थ्यान्नासिद्धत्वमिति ब्रुवते, ते तु "इसुसोः" इति सूत्रे "अर्थवद्ग्रहणे नानर्थकस्य" इति बलेनार्थवतोरिसुसोरेव सम्भवात् तत्र ग्रहणमिति सिद्धान्तदशा द्विष्करोतीत्यादौ अनर्थके तदप्रवृत्त्या पराभवन्ति ।

## प्रथमयोः पूर्वसवर्ण इति—

अत्र सूत्रे "औजसोः पूर्वः" इति करणेनैव सिद्धौ प्रथमयोरिति करणेन प्रथमाद्वितीयारूपसुब्विभक्त्योर्ग्रहणमिति स्पष्टं भाष्ये । अत्र च पूर्वग्रहणासत्त्वे "प्रथमयोः सवर्ण" इति न्यासे हरी इत्यादौ औकारस्य सावर्ण्ये हरावित्याद्यसाध्वेव स्यादिति तद्ग्रहः । नच "ईदूदेद् द्विवचनम्" इति सूत्रारम्भसामर्थ्यात् परसवर्णदीर्घाभावो ज्ञाप्येतेति वाच्यम् ? तस्य नपुंसके वारिणी इत्यादौ चारितार्थ्यसम्भवेन वैयर्थ्याभावात् यदि च इकारांशे चारितार्थ्यसम्भवेऽपि नोकारांशे चारितार्थ्यसम्भव इति ज्ञापकत्वं युक्तमिति विभाव्यते तदा पूर्वग्रहणन्नैव कार्यमिति शिशुतोषिणीकाराः ।

अत्र पूर्वो भवति सच दीर्घःइत्यर्थे पूर्वस्यादीर्घत्वात् सामर्थ्यात् पूर्वजातीयो भवतीत्यर्थस्य सुतरां लभ्यमानत्वेन सवर्णग्रहणं सुत्यजमिति गमृनित्यादौ च "ऋलवर्णयोर्मिथ" इति वार्त्तिकीयसाजात्यस्य ( सावर्ण्यस्य ) विद्यमानत्वान्न दोष इति शेखरकाराः ।

ननु सर्वं विहाय "सुट्शसोःपूर्वसवर्ण" इत्येवास्तु तथा च प्रथमयोरिति विभक्त्योर्ग्रहणन्नतु वचनयोरित्यत्र ज्ञापकानुसरणक्लेशादिकमपि न भवतीति लाघवानुसन्धानम् । नच पदलाघवाभावः ? यथा पाणिनीयेऽपि एकशेषेण प्रथमयोः इत्यत्र पदद्वयबोधसिद्धान्तात् ।

अथवा "सुटि पूर्वसवर्णः" इत्येको योगः "शसः" इति चैकः पृथग्योगः । अस्मादेव च द्वितीययोगात् शस इत्यनुवृत्त्या सिद्धौ "तस्माच्छसो नः पुंसि" इत्यत्र शस्ग्रहणाकरणरूपपदलाघवस्यापि विद्यमानत्वाच्चेति विभावयामः ।

## अर्थवदिति—

ननु "ह्रस्वो नपुंसके" इति सूत्रभाष्योक्तरीत्या "तिप्तस्झि" इति तिशब्दादारभ्य "स्वौजस" इति सुपः पकारपर्यन्तं तिप्प्रत्याहारमाश्रित्य तिबन्ततदादिभिन्नम्प्रातिपदिकसंज्ञकम्भवतीति भावार्थकः "अतिप् प्रातिपदिकम्" इति न्यास एवास्तु सुबन्ते तिङन्ते च अतिबिति पर्युदासादेव न संज्ञा, समासे विधायकं वाक्ये व्यावर्त्तकञ्च "समासश्च" इति नियमार्थं पृथक् सूत्रं वर्त्तत एव । तेन च राज्ञः पुरुष इत्यादि वाक्यस्थप्रातिपदिकत्वव्यावृत्तिः, अच्युतपन्नरामादेशश्च तत्त्वसिद्धिः । एवं कृदन्ते तद्धितान्ते च पूर्वसूत्रेणैव प्रातिपदिकत्वं सिध्यति इति उत्तरत्र सूत्रे कृत्तद्धितग्रहणाकरणलाघवञ्च सम्भवतीति न्यासो भूषणादिसम्मतो मान्य इति चेन्न ? अर्थवदिति किम् धनं वनमित्यादौ प्रतिवर्णं संज्ञापत्तेः, दश दाडिमानि षडपूपा इत्यादिवाक्यस्य च तत्त्वापत्तेः, पञ्चगवादेस्तिबन्ततदादिभिन्नत्वेन प्रातिपदिकत्वेन पदत्त्वे सुब्लोपाद्यापत्तेश्च भाष्योक्तायास्तादवस्थ्यात् ।

परेतु "अर्थवत् प्रातिपदिकम्" इत्येवास्तु अधातुग्रहणमप्रत्ययग्रहणञ्च मास्तु । न च धातोः प्रातिपदिकत्वापत्तिः ? तथा सति धातूनामपि प्रातिपदिकत्वेनैव ग्रहणे सिद्धे "सुपो धातुप्रातिपदिकयोः" इत्यत्र पृथग् धातुग्रहणेन धातूनान्न प्रातिपदिकत्वमिति व्याख्यानाददोषात् । नापि प्रत्ययानां धातुत्वापत्तिः ? तथा सति "सात्पदाद्योः" इत्यत्र साद्ग्रहणस्य वैयर्थ्यापत्तेः प्रत्ययानां प्रातिपदिकत्वाभावज्ञाप-

-नात् । नापि प्रत्ययान्तानामप्रातिपदिकत्वप्रसङ्गः ? उत्तरसूत्रे "कृत्तद्धित" इत्यत्र तद्धितग्रहणस्य करणेन प्रत्ययान्तानान्तत्त्वाभावज्ञापकत्वात् । समासग्रहणकृतनियमाच्च वाक्यस्य न भविष्यति प्रातिपदिकत्वमिति न्यासस्सुवच इत्यामनन्ति । तन्न ? अनेकनियमस्वीकारे ज्ञानगौरवात् ।

केचित्तु—"लिङ्गवत् प्रातिपदिकम्" इत्येवास्तु न्यासः तथैव धनादौ प्रत्येकवर्णस्य, दशदाडिमानीत्यादिसमुदायस्य, पञ्चगवादेश्च न प्रातिपदिकत्वं लिङ्गवत्त्वाभावादिति । तद्धितग्रहणस्य नियमार्थतया च न प्रत्यायान्तस्य संज्ञेति ।

एवम् "परवल्लिङ्गम्" इत्यादिबलाच्च समासे लिङ्गवत्त्वाभ्युपगमादेव प्रातिपदिकत्वस्य सूत्रेणैतेन सिद्धया उत्तरसूत्रे समासग्रहणमपि न कार्यम्भवति । नच लिङ्गवत्त्वाभावेन प्रातिपदिकत्वाभावे काऽव्ययानां गतिरिति वाच्यम् ? निरुक्तप्रकारेण अव्ययेभ्यस्सुबुत्पादाभावात् सुब्लोपार्थमारब्धस्य "अव्ययादाप्सुपः" इति सूत्रस्य वैयर्थ्येन अलिङ्गवत्त्वेऽपि तेषां प्रातिपदिकत्वस्वीकारात् स्वाद्युत्पत्तेर्निर्बाधत्वात् । न च अव्ययीभावार्थन्तत् सूत्रञ्चरितार्थन्न ज्ञापकतामर्हति इति वाच्यम् ? तावन्मात्रप्रयोजनत्वे "अव्ययीभावात्सुप" इत्यस्यैव पाठ्यत्वे सामान्यतस्सूत्रकरणस्य ज्ञापकत्वसम्भवात् इति प्राहुः ।

स्वतन्त्रास्तु—"अर्थवदविभक्ति प्रातिपदिकम्" इत्येव न्यासोऽस्तु उत्तरसूत्रे कृत्तद्धितग्रहणञ्च न कार्यम् , समासग्रहणनियमाद् वाक्यस्य, सातिग्रहणाच्च प्रत्ययस्य प्रातिपदिकत्ववारणसम्भवादिति वदन्ति । तन्न ? प्राग्दिशीयानां त्रलादीनामपि "प्राग्दिशो विभक्तिः" इति विभक्तित्वेन प्रातिपदिकत्वाभावे पदत्वानापत्तेः तत्र गच्छेत्यादौ "तिङ्ङतिङ" इति निघातानापत्तेः ।

वस्तुतस्तु भव इत्यादि तिङन्तस्यापि प्रातिपदिकत्वप्रसङ्गः, "न ङिसम्बुद्धयोः" इत्यत्र सम्बुद्धिग्रहणेन प्रत्ययलक्षणेनाविभक्तीतिनिषेधाप्रसक्तेः । मम तु शपः प्रत्ययत्वेन तस्य प्रत्ययान्तत्वाक्षतेः प्रातिपदिकत्वस्य सुवार्यत्वात् ।

उत्तानास्तु—शक्तिमत् प्रातिपदिकम् इत्यस्तु न्यासःशक्तिश्च प्रसिद्धाप्रसिद्धभेदाद् द्विविधा । अव्ययस्यापि च शक्तिमत्त्वेन तत्त्वसिद्धिः । वाक्ये शक्तिसत्त्वेऽपि समासग्रहणकृतनियमेनैव वारणम् । धातूनाम्प्रातिपदिकत्वेऽपि तिङादिभिरपवादभूतैस्स्वादीनां बाधात् । संख्याकर्माद्यनन्वयित्वाच्च न प्रत्ययस्य केवलस्य प्रातिपदिकत्वेऽपि ततस्सुबाद्युत्पत्तिः । औत्सर्गिकैकवचनमपि सत्येव विशिष्टे गमके । एवं

"नलोपः प्रातिपदिकान्तस्य" इत्यस्य स्थाने "नलोपोऽतिङ् ङिति" इति न्यासेन प्रत्ययान्तस्य इदानीं प्रातिपदिकत्वेऽपि अहन्नित्यादौ न नलोपप्रसङ्गः। नच अ अहन्निति यस्मिन् व्यापारे स आहा इत्यत्र नलोपानापत्तिरिति वाच्यम् ? तथापि "नलोपः सुप्यतः" इति न्यासेनादोषात् । नच मूलकेनोपदंशमित्यस्य शक्तिमत्त्वेन प्रातिपदिकत्वापत्तिरिति वाच्यम् ? समासग्रहणकृतनियमेनैव तद्वारणसम्भवात् । शक्तिद्वैविध्यस्य प्राग्दर्शितत्वेन सिंहो माणवक इत्यादौ सिंहादिशब्दस्य अप्रसिद्ध-शक्तिमत्त्वेन तत्त्वसिद्धिः । नच केवलप्रत्ययस्य प्रत्ययान्तस्य वा प्रातिपदिकत्वे ह्रस्वापत्तिरिति वाच्यम् ? "ह्रस्वो नपुंसके" इत्येतावन्मात्रेणैव सिद्धे पृथक् "प्राति-पदिकस्य" इति ग्रहणसामर्थ्येन सत्त्वप्रधानप्रातिपदिकस्यैव तत्र ग्रहणबोधनेन ह्रस्वविधायकशास्त्रस्य केवलप्रत्ययादौ प्रवृत्त्यापत्त्यसम्भवात् इति प्रवक्तुमीहन्ते इत्यलम् ।

## स्वौजसमौडिति-

ननु रामशब्दात् प्रातिपदिकादनेन सौ उकारस्येत्त्वे "ससजुषो रुः" इति रुत्वं भवति इति प्रक्रियागौरवापेक्षया लाघवात् "स्वौजस" इत्यस्य स्थाने "रुौजस" इति पठित्वा यत्र यत्र सुः पठ्यते तत्र तत्र रुरेव पठ्यतामिति चेन्न ? तथा न्यासे नि-यमे "सुपि च" इत्यत्र "रुपि च" इति पाठे राम रु इत्यत्र दीर्घापत्तेः । राद्धान्ते तु "ससजुषोरुः" इति विहितरुत्वस्य दीर्घापेक्षया असिद्धत्वान्न भवति दीर्घः । नच पथिमथ्यृ" इत्यात्वविधानसामर्थ्येन, अम्विभक्तेरकारात् सुपः पकारपर्यन्तम्प्र-त्याहारमाश्रित्य "रुपि च" इत्यस्य स्थाने "अपि च" इति न्यासने, "टिभ च" इति न्यासेन वा न दोष इति ।

नच "पथिमथि" इति ह्रस्वाकारे एव विधिमति रौ भवदीयरीत्या दीर्घेण सिद्धौ दीर्घाकारविधानस्य रौ दीर्घाभावज्ञापकता न युक्ता, सम्बोधने हे पन्था इत्यादौ ह्रस्वाकारे विधीयमाने "एङ्ह्रस्वात्" इति ह्रस्वात् परत्वमादाय प्रसक्तां सम्बुद्धि-लोपापत्तिं निराकरोति दीर्घविधानमिति कथं ज्ञापकमिति वाच्यम् ? परत्वात् नित्य-त्वाच्च "रुपि च" इति दीर्घेण सम्बुद्धिलोपबाधात् इति वाच्यम् ? तथा सति यशोऽत्र पयोऽत्रेत्यादौ "अतो रोरप्लुतात्" इति दृष्ट्या "ससजुषोरुः" इति रुत्व-स्यासिद्धत्वेन कथमुत्वमिति जिज्ञासायां रुत्वमनूद्य उत्वविधानसामर्थ्यान्नासिद्ध-मिति राद्धान्तः । साम्प्रतन्तु रोः परसापादिकत्वेनासिद्धत्वाभावात प्रथमैकवचने

उत्वस्य शिवोऽर्च्य इत्यादौ चारितार्थ्येन तादृशकल्पनायाः कर्त्तुमशक्यत्वात्। यशो-ऽत्र इत्यादौ विभक्तिभिन्नस्य प्रकृतिसकारस्य यद्रुत्वं "ससजु" इत्येतेन तस्यासिद्धत्वं सापादिकोत्वदृशा कथमपि वार्यन्न स्यादित्याशयः।

नच तथापि "ससजु" इत्यस्य सपादसप्ताध्याय्याम्पाठ एवास्तु तथा सति न तदसिद्धतेति दोषाभाव इति वाच्यम्? तथा सति पिपठीरित्यादौ रुत्वे कर्त्तव्ये रुत्वस्यापि सापादिकत्वेन "पूर्वत्रासिद्धम्" इत्यस्याविषयत्वेन 'पूर्वत्रासिद्धे न स्थानिवत्' इति वचनाप्राप्त्याऽल्लोपस्य स्थानिवत्त्वेन रुत्वानापत्तेः, कसि धातोर्नुमि संयोगान्तलोपस्यासिद्धत्वात् रुत्वे कनिति रूपासिद्धेश्च। नच "अहन्" इति सूत्रेण रुत्वापेक्षया लाघवाद् रेफे एव विधातव्ये रुत्वविधानस्य निष्फलतया तत्सामर्थ्यात् उत्वे रुत्वस्यासिद्धता न भवतीति वाच्यम्? रेफमात्रविधाने अहस्सु इत्यत्र "रोः सुपिः" इति नियमेन विसर्गानापत्तेः, रुविधानस्य "भो भगो" इति यत्वार्थं तदभावार्थञ्च रविधानस्य चारितार्थेन ज्ञापकत्वासम्भवाच्च।

नच "रूपरात्रि" इति "वार्त्तिकेन रुविधानमेवोक्तार्थे ज्ञापकमस्तु अन्यथा "हशि च" इत्युत्वे कर्त्तव्ये रुत्वस्यासिद्धत्वात् "रो रि" इति रेफलोपे "रोऽसुपि" इति रेफादेशात् फलेऽविशेषात् तद्वैयर्थ्यं स्पष्टमिति वाच्यम्? तस्यापि "भो भगो" इति यत्वार्थमावश्यकत्वात्। न च रुत्वस्य यत्वमात्रप्रयोजनत्वे रुविधायकेन यकार एव विधीयतां किं रुविधानेनेति तथा विधानं ज्ञापकं स्यादेवेति वाच्यम्? अहन्-शब्दात् "तत्करोति तदाचष्टे" इति णिचि टिलोपे क्विपि गोशब्देन समासे रूपपद-समभिव्याहारे आनुमानिकस्थान्यादेशभावेन अवशिष्टेऽहशब्देऽहन्त्वबुद्ध्या "रूपरात्रि" इति वार्त्तिकेन हकारस्य रुत्वे गोररूपम् इत्यत्र "भो भगो" इत्यस्याप्राप्त्या "रो रि" इति लोपे गोरूपमितीष्टं साम्प्रतं वार्त्तिकेन यत्वविधाने तदसिद्धिप्रसङ्गात्। नचैवमपि वार्त्तिकेन यत्वम्मा विधीयतां रुत्वमपि मा विधीयतां किन्तु लोपे एव विधातव्ये रुविधानमिष्टार्थे ज्ञापकं स्यादिति वाच्यम्? रूपशब्दादाचारक्विबन्ताल्लङि अरूपदिति तस्य गोहशब्दसमभिव्याहारे वार्त्तिकेन रुत्वे गोररूपदितीष्यते लोपविधाने तु हकारस्य लोपे पूर्वरूपे गोरूपदिति फलभेदसत्त्वात्। नचानभिधानमीदृशरूपाणामिति वाच्यम्? तथा सति तच्छास्त्रीयरुत्वस्योत्वम्प्रति सिद्धत्वेऽपि रुमात्रस्य तत्त्वज्ञाने (सिद्धत्वज्ञापने) मानाभावात्। नच तथा सति सुस्रोतोऽत्र स्नाहीत्यादौ रुत्वस्यासिद्धत्वेनैव दोषविरहे तदर्थम् "अतो रोः" इति सूत्रे क्रिय-

माणमप्लुताद्ग्रहणमेव व्यर्थीभूतं सदुक्तार्थे ज्ञापकं स्यादिति वाच्यम् ? आगच्छतु भवान् देवदत्त ३ अत्रेत्यादौ "वौर्जस्" इति सूत्रविहितरोरुत्वनिराकृतये तच्चारितार्थ्यात्। वात्सी बन्धुरिति "आकडारा" सूत्रीयभाष्यप्रयोगे वात्स्याः इकारस्य प्लुतत्वदर्शनेन नव्यमतेऽसम्बोधनेऽपि "दूराद्धूते" इति प्लुतस्येष्टत्वात्। हे दीर्घाहा अत्र स्नाहीत्यत्र रोरसिद्धत्वाभावस्य हे अहः ३ रूपमस्तीत्यत्रासिद्धत्वाभावस्य कल्पनाया उक्तत्वात् तत्रोत्वापत्तेश्च।

अपरे तु "अतो रोः" इति सूत्रे अप्लुते इति ग्रहणमेव ज्ञापकम्, अन्यथा तद्व्यावर्त्ये सिद्धान्तभूते तिष्ठतु पय आग्निदत्तेत्यत्र रुत्वस्येदानीन्तनप्रकारेण असिद्धत्वात् स्पष्टं वैयर्थ्यात्। एवम् अतीति तपरकरणं किं श्व आगन्तेति व्यावर्त्येऽपि रुत्वस्यासिद्धत्वादुत्वाप्राप्तेरिदमपि ज्ञापकम्भवितुमर्हतीति वदन्ति। तन्न ? तिष्ठतु देवदत्त अ३ग्निदत्तेत्यत्र, देवदत्त आगन्तेत्यत्र च उत्वाभावाय तयोर्ग्रहणस्य चारितार्थ्येन ज्ञापकत्वोपवर्णनस्यायुक्तत्वात्पूर्वोक्तज्ञापकानामेव श्रेयस्साधकत्वादित्यलम्।

## विभक्तिश्च—

ननु सुप्तिङोः विभक्तिसंज्ञाविधायकं "विभक्तिश्च" इति सूत्रम्मास्तु यत्र यत्र "न विभक्तौ तुस्माः" इत्यादौ विभक्तिग्रहणन्तत्र तत्र सुप्तिङोर्ग्रहणमेवास्तु लाघवात्। नचैवम्प्रकारेण "अष्टन आ विभक्तौ" इत्यस्य स्थाने "अष्टन आ सुपि" इति न्यासे "त्यदादीनामः" इत्यत्र सुप एवानुवृत्तौ यत्र तत्र इत्यादौ त्रल्प्रत्ययान्तेऽत्वन्न स्यात् सुप्परत्वाभावादिति वाच्यम् ? यथा राद्धान्ते "प्राग्दिशो विभक्तिः" इत्यनेन त्रलादीनां विभक्तिसंज्ञया सिद्धिस्तथेदानीम् "प्राग्दिशस्सुप्" इति विन्यस्यादोषात्। नचैवं प्राग्दिशीयानां सुप्संज्ञाविधाने एतर्हि इत्यत्र "सुपि च" इति दीर्घापत्तिरिति वाच्यम् ? "सुपि च" इत्यस्य स्थाने "भ्मि च" इति न्यासेनादोषात्। अङ्गाधिकारीय यादौ भादौ प्रत्यये परे दीर्घ इति तन्न्यासार्थात्। न च तथा सति ब्राह्मण भिस्सा इत्यादौ भिस्साशब्दे परे दीर्घवारणसम्भवेऽपि सारसायन भक्त इत्यत्र "भौरिक्याद्यैषुकार्यादिभ्यो विधल्भक्तलौ" इति विहितभकारादिप्रत्यये दीर्घो दुर्निवार इति वाच्यम् ? "अतो भिस" इति सूत्रान्तरसाहचर्य्येण "स्वौजस" सूत्रविहितभादिप्रत्ययस्यैव ग्रहणेनादोषात्।

अथवा एतर्हीत्यत्र दीर्घवारणाय "सुप्यरि च" इति न्यासं विधाय रादिभिन्ने दीर्घविधानेनादोषात्। अहिलं विधाय पररूपेण दोषवारणन्तु न युक्तम् ?

बहुर्हीत्याद्यसिद्ध्यापत्तेः । नच तथा प्राग्दिशीयानां सुप्त्वे "सुपो धातु" इति त्रलो यत्रेत्यादौ लुगापत्तिरिति, कुत्र इवाचरति कुत्रति इत्यादौ त्रलस्सुप्त्वेन सुबन्तस्य पदत्वेन प्राक् शपोऽकारेण सहेष्टस्यापि पररूपस्येदानीमभावापत्तिरपदान्तत्वावात् इदानीमित्यादौ "अनुदात्तौ सुप्पितौ" इत्यनुदात्तत्वापत्तिश्चेति वाच्यम् ? त्रलादीनां विधानसामर्थ्यात् "अत्रानुनासिक" इत्यादिनिर्देशाद् वा लुग्वारणसम्भवात् । पदसंज्ञाविधायके "सुप्तिङन्तम्पदम्" इत्यत्र तिङोऽष्टाध्यायीस्थैक (तिप्तस्) सूत्रोपात्तत्वेन सुपोऽपि तादृशस्यैव ग्रहणेन प्रकृते कुत्रति इत्यादौ पदत्वाभावेन पररूपसिद्धेर्निर्बाधत्वात् । त्रल् विधानस्य यत्रेव तत्रेव इत्यादौ "इवेन समासस्सुब्लोपश्च" इति इदानीन्तनन्यासेन अलुग्विधानाच्चारितार्थ्येन तद्धितान्तत्वादव्ययसंज्ञायां "अव्ययादाप्" इति सुब्लुगर्थं वा चारितार्थ्येन "अत्रानुनासिक"इत्यादि निर्देशेनैव "सुपो धातु"इति लुग्वारणं युक्तमुक्तम् । नच त्रलादेर्लित्वस्य तत्रेत्यादौ चारितार्थ्येन सर्वदा सर्वत्र इत्यादौ "सर्वस्य सुपि" इत्यनेन सर्वस्याद्युदात्तस्स्यात् सुपीत्यर्थकेनाद्युदात्तत्वापत्तिरिति वाच्यम् ? तादिदादिथादिभिन्ने सुपि सर्वस्याद्युदात्त इत्यर्थकेन "सर्वस्य सुप्यत्थेषु" इति न्यासेनादोषात् ।

अष्टन् शब्दादाचारक्विबन्ताल्लटि तिपि शपं बाधित्वा परत्वात् प्रतिपदोक्तत्वाद् विभक्तिग्रहणसामर्थ्याच्च अष्टनो नकारस्यात्वे अष्टातीति प्रयोगार्थम् "अष्टन आ विभक्तौ" इत्यत्र विभक्तिग्रहणमावश्यकम्, सुब्ग्रहणे तु तदसिद्धेरिति ब्रुवतस्सन्तोषाय "अष्टन आ सुतिङि" इतिन्यासेनैव सिद्धिरुपपाद्या । तथा च दोषविरहेण त्याज्यमेव "विभक्तिश्च" इति सूत्रम् । परमत्र सर्वविधगौरवं विचिन्तनीयम् ।

## एकवचनं सम्बुद्धिः—

ननु "सम्बोधने च" इति सूत्रात् सम्बोधन इत्यस्यानुवृत्त्या सप्तमीबहुवचनसोर्ग्रहणापत्त्यभावेनादोषाल्लाघवात् "एकवचनं सम्बुद्धिः" इत्यस्य स्थाने "सुःसम्बुद्धिः" इत्येवास्तु न्यासः । नच पाणिनीयन्यासे एकग्रहणमेकत्वविशिष्टार्थवाचकस्यैव सम्बुद्धिसंज्ञार्थम्, अन्यथा यथा "सामन्त्रितम्" इति अष्टाध्यायीक्रमात् पूर्वसूत्रे आमन्त्रितसंज्ञा तदन्तस्य कृता तथेयमपि तदन्तस्य ( स्वन्तस्य ) एव स्यादिति वाच्यम् ? सम्बुद्धावङ्गस्य गुण इति व्यवहारान्न तदन्तस्य संज्ञेति नागेशोत्तरस्यैवेहाश्रयणाददोषात् । एवं न्यासस्सुवच इति शेखरतत्त्वबोधिनीवादरत्नन्यासरत्नावल्यादिकाराः । **परमत्रेदमनुसन्धेयम्** द्विरुक्तप्रकरणे "असमासवद्भावे पूर्व-

पदस्थस्य सुपः सुर्वक्तव्यः'' अन्योन्यं विप्रा नमन्ति अन्योन्यस्मै देहीत्यादि कौमुदी। तत्रत्यस्य सोः केन सम्बुद्धित्वं वारणीयम्। तत्र वार्त्तिके रुर्वक्तव्य इति पाठे तु सुवच एव सर्वाभिमतः प्रकार इति पण्डितराजा मदीयतातचरणाः शुक्लाः।

## लशक्वतद्धित इति—

ननु तद्धितभिन्नप्रत्ययाद्याः कवर्गा इतस्स्युरित्यर्थकः "क्तद्धित" इत्येवास्तु किं लशग्रहणघटितगुरुभूतन्यासेनेति। यत्र "कर्त्तरि शप्" इति तत्र कर्त्तरि छप्" इत्येवास्तु "चुटू" इत्यनेन च निर्वाहसम्भादिति चेन्न? छबादेः छकारस्य "आयनेयीनी" इति इयादेशप्रसंगात्, ल्युट् ल्यु इत्यादिप्रत्ययानां लकारस्येत्त्वाभावेन "लिति" इति सूत्रेण लित्प्रत्ययात् पूर्वमुदात्तमित्यर्थकेन लित्स्वरानापत्तेश्च। नचेत्संज्ञालोपाभ्यामपहारात् छाभावेन नेयादेशापत्तिः इति वाच्यम्? इयादेशेन तयोर्बाधात्। अत एव तद्धितीयप्रत्ययादौ "चुटू" इत्यस्य न प्रवृत्तिः। अन्यथा तत्रापि इत्संज्ञालोपाभ्यां छस्यापहारे क इयादेशविधायकम्प्रवर्त्तेत। नच फढादिसाहचर्यात् तद्धित एवेयादेशप्रवृत्तिः इति वाच्यम्? कृदन्ते "मत्वर्थाच्छः" मत्वर्थीय इत्यादावपि तद्दर्शनात्। एवम् "शमेः खः" शंख इत्यत्र "आयनेयी" ईनादेशमाशंक्य "प्रातिपदिकविज्ञानाच्च भगवतः पाणिनेः सिद्धम्" इति भाष्याच्च तत्र सूत्रे साहचर्यपरिभाषाया अप्रवृत्तिकल्पनात्। नच "मत्वर्थाच्छ" इत्यादीनामपि तद्धिताधिकार एव पाठोऽस्तु इति वाच्यम्? तथात्वे कृत्स्वरानापत्तेः।

नच एवमपि ल्युट्स्थाने टयुलिति ल्योःस्थाने च युलिति पठित्वा "हलन्त्यम्" इति लस्येत्वे लित्स्वरसिद्धौ न बाधकमिति वाच्यम्? तथापि प्रथमदोषस्य छबादेरियापत्तिरूपस्य जागरूकत्वेन यथान्यासस्यैव कार्यत्वात्।

## तस्माच्छस इति—

ननु "अकः सवर्णे" इत्यतोऽक इत्यनुवर्त्य अकः परस्य शसो नुक् नुम् वा पुंसि इत्यर्थकः "शसो नुक् पुंसि' शसो नुम् पुंसि" इति वा न्यासोऽस्तु। एवञ्च "आदेः परस्य" इति परिभाषया "मिदचोऽन्त्यात्" इति परिभाषया वा शसोऽकारस्यान्तावयवे नुकि नुमि वा कृते पूर्वसवर्णदीर्घे "संयोगान्तस्य" इति सकारलोपे रामानित्यादेः सिद्धेः। दुह इत्यादौ स्पष्टम् अकः परत्वाभावाच्छसस्तदभावः। गाः पश्यतीत्यादावपि ओकारसत्त्वेऽनकःपरत्वं स्पष्टम् "औतोऽम्शसोः" इत्यात्वेऽप्यकः परत्वालाभात् नापत्तिः। न च अष्टौ इत्यत्रात्वे शस औशादेशे जाते नुगा-

द्यापत्तिः ? आत्वस्य परनिमित्तकत्वेन बहिरङ्गतयाऽसिद्धत्वादकः परत्वालाभात् । इति **चेदत्रोच्यते**—स्थानिवद्भावविधायक "अचः परस्मिन्" इत्यत्र पञ्चमी-समासपक्षे विश्वप इत्यादौ आलोपस्य स्थानिवत्त्वेनाकः परत्वान्नुगाद्यापत्तेः ।

वस्तुतस्तु हे गौः प्रविगणय्य इत्यादिभाष्यप्रयोगात् पञ्चमीसमासास्वीकारेणानि-त्यत्वकल्पनेन वा इष्टानुरोधिव्याख्यानेन न कुत्रापि दोषः ।

## सुपि चेति—

ननु "अतो दीर्घो यञि" इत्यत्र "तुरुस्तुशम्यमस्सार्वधातुके" इति सूत्रादा-गच्छन्त्याः सार्वधातुकपदानुवृत्तेरनाश्रयणात् अदन्ताङ्गस्य दीर्घो यञादौ प्रत्यये इत्यर्थेनैव भवामि भविष्यामि रामाभ्यामित्यादीनां सिद्धौ "सुपि च" इति सूत्रं किमर्थम् । नच तत्र सार्वधातुकपदाभावे केशशब्दात् "केशाद् वोऽन्यतरस्याम्" इति वप्रत्यये केशव इत्यत्र, एवम् अङ्गशब्दात् "अङ्गात् कल्याणे" इति न प्रत्यये अङ्गना इत्यत्र च दीर्घापत्तिरिति वाच्यम् ? तत्र तत्र वन इत्यपेक्षया अव अना इति अकारादिप्रत्ययौ विधाय "अतो गुणे" इति पररूपेणैव निष्पत्तौ पररूपविधेर्दीर्घबा-धकत्वाददोषात् ।

नच केशशब्दादाचक्षाणणिजन्तात् कर्तृक्विपि हलन्तकेश्शब्दात् एकदेशविकृत-न्यायेन अवप्रत्यये केशव इति राद्धान्ते तु वप्रत्यये केश्व इति, एवम् विष्णुण इत्यत्र च अनप्रत्यये फलभेदसत्त्वान्न प्रत्यययोरकारादित्वं विधातुं शक्यते इति दोषौ तदवस्थाविति वाच्यम् ? तथा सति "शृङ्गवृन्दाभ्यां रकन्" इत्येवं सिद्धे दीर्घे च शृङ्गारक इत्यादावक्षतया "शृङ्गवृन्दाभ्यामारकन्" इति आकारोच्चारणसामर्थ्येन तद्वितीये प्रत्यये नानेन दीर्घ इति सामान्यतः कल्पनयाऽदोषात् ।

नच शृङ्गशब्दादाचक्षाणणिजन्तात् कर्तृक्विपि निष्पन्नहलन्तार्थम् आकारोच्चा-रणमिति वाच्यम् ? "आरगुदीचाम्" इत्यत्र रका सिद्धे आकारोच्चारणमन्यतो विधा-नार्थं तेन जडस्यापत्यं जाडार इत्यादीति भाष्यसिद्धान्तेन आचक्षाणणिच्प्रकृतिक-क्विबन्तानामनभिधानकल्पनात् । अन्यथा तथैव तत्रैव हलन्तगोधूशब्दे फलभेदस-त्त्वाद् भाष्यासङ्गत्यापत्तेः । विशेषापेक्षत्वेन ज्ञापकस्य आबन्तविषयकत्वे तु "विन-ञ्भ्यां नानाञौ न सह" इति सूत्रेण नमात्रे विधातव्ये ऽनेन दीर्घे सिद्धौ वृद्ध्यर्थं नाञो ञित्करणवैयर्थ्येन तद्धिते प्रत्यये "अतो दीर्घः" इति सूत्रेण दीर्घो न भवती-

ति कल्पनेनादोषात् । स्वरे "ञ्नित्यादिर्नित्यम्" इत्याद्युदात्तत्वार्थन्तदिति तु न ? तन्मात्रप्रयोजनत्वे "वेर्ना नञो नोदात्तश्च" इति न्यासेन तत्सिद्धेः ।

परेतु तथा सति "शरादीनाञ्च" इति शरावतीत्यत्र दीर्घ विधानं नियमार्थं दीर्घस्तद्धिते चेत् शरादीनामेवेति वर्णयन्तः केशवादौ दोषमुद्दिधीर्षन्ति । तन्न ? शरस्य इः शरे नपुंसक ह्रस्वत्वे शरि इति ततो मतुपि दीर्घार्थन्तस्य चारितार्थ्यात्। शरादीनान्दीर्घश्चेत्तद्धित एवेति प्रमाणाभावेन विपरीतनियमस्यापि सम्भवे शराभ्यामित्यादौ दीर्घानापत्तेश्च । नच "सुपि च" इत्यस्याभावे "अतो दीर्घो यञि" इत्यस्य सुब्विधित्वाभावेन "नलोपः सुप्स्वर" इत्यस्याप्रप्त्या नलोपस्य सिद्धत्वेन राजभ्यामित्यादावपि दीर्घापत्तिरिति वाच्यम् ? सुप्त्वधर्मवन्निमित्तके विधौ नलोपोऽसिद्ध इति तदर्थवर्णनेन प्रकृतेऽपि सुप्त्वधर्मवान् भ्यामिति तन्निमित्तीकृत्य जायमाने दीर्घे "नलोपः सुप्" इति प्रवृत्त्या नलोपस्यासिद्धत्वेनादोषात् । पथिषु इत्यादौ षत्वसिद्धये सुप्त्वतद्व्याप्यान्यतरधर्मवन्निमित्तके विधौ नलोपोऽसिद्ध इत्यर्थे दोषतादवस्थमिति तु न ? तथा सति "नलोपः सुप्" इत्यत्र "पूर्वत्रासिद्धम्" इत्यतः पूर्वत्रेत्यनुवर्त्य पूर्वस्मिन् सुबादिविधौ कर्त्तव्ये नलोपोऽसिद्ध इत्यर्थेन षत्वविधेः नलोपविध्यपेक्षया पूर्वत्वाभावेनादोषात् ।

अन्येतु "नलोपः सुप्स्वरसंज्ञायैस्तुगविधि" इत्यादिरूपेण न्यासं कृत्वा संज्ञा च आश्च एश्च ऐश्चेति द्वन्द्वेन राजभ्यामित्यादौ न दोषः । नच राजाश्व इत्यादावपि आ ( दीर्घ ) विधेस्सत्त्वेनासिद्धत्वापत्तिरिति वाच्यम् ? तथा सति "अतो दीर्घो यञि" इति विहाय "अत आ यञि" इति विन्यस्य प्रतिपदोक्तस्यैवाकारस्य ग्रहणेनादोषात् तस्य च "अकः सवर्ण" इति लाक्षणिकत्वेनाग्रहादिति वदन्ति । नच तथा न्यासे सति अय्धातोर्वनिपि "लोपो व्योः" इति यलोपे सौ अवा इत्यत्र दीर्घापत्तिरिति वाच्यम् ? ह्रस्वाकारे एव विधातव्ये दीर्घेण सिद्धो "विड्वनोरनुनासिकस्यात्" इति दीर्घाकारविधानवैयर्थ्येन कृति परे नानेन दीर्घ इति कल्पनया दोषविरहात् । नच गोजा इत्यस्य सिद्धये दीर्घाकारविधानं चरितार्थमिति वाच्यम् ? प्रत्ययलक्षणेन विटि दीर्घेणैव सिद्धेः । नच "वर्णाश्रये नास्ति प्रत्ययलक्षणम्" इति प्रवर्त्तेतेति वाच्यम् ? तस्य वर्णप्राधान्यविषयकत्वस्वीकारात् । तस्मात् "सुपि च" इति सूत्रस्य "बहुवचने" इत्यत्रोत्तरार्थत्वमात्रम्प्रयोजनम् ।

अत एव सुपि किम् पचध्वम् इति भट्टोजिदीक्षिताः । नच ध्वम् प्रत्ययापेक्षया-

ऽध्वमो विधानेन तत्रापि दोषाभाव इति वाच्यम् ? एधांचकृढ्वे इत्यस्यासिद्ध्यापत्तेः ॥ नच "बहुवचने झल्येत्" इति विन्यस्य सकारभकाराभिन्नबहुवचनसुबव्यवहितपूर्वत्वविशिष्टस्यादन्ताङ्गस्यैत्वमित्यर्थेन पुनरपि दोषाभाव इति वाच्यम् ? सम्पूर्वकगम्धातोः "समोगमृच्छिभ्याम्" इत्यात्मनेपदे संगसीरन्नित्यत्रैत्वापत्तेः । भादिसाहचर्यात् सादेरपि सुप एव ग्रहणाद् दोषविरहे तु "घेर्ङिति" इत्युत्तरार्थं "सुपि च" इत्यस्यावश्यकत्वात् अन्यथा पट्वीत्यत्रापि गुणापत्तेः । अत एव सुपि किम्. पट्वी इति कौमुदीकाराः ।

नच "वोतो गुणवचनात्" इत्यनेन ङीप एव विधानमस्तु इति ङीपि ङित्त्वाभावादेव गुणाप्राप्तेरदोषे पुनरपि "सुपि च" इति व्यर्थमेवेति वाच्यम् ? पट्वीशब्दादाचारक्विबन्तादात्मनेपदस्य "अनुदात्त ङित" इति सिद्धये ङित्करणस्य ङीपादावावश्यकत्वात् तथा च पट्वीयते इति सिद्धेः । नच "ब्राह्मणमाणवाडवाद् यन्" इति सूत्रे ब्राह्मणादीनां समेषां वृद्धत्वात्तत्त्वस्याप्रयोजनत्वात् "केदाराद् यञ् च" इति सूत्राद् यञ्ग्रहणेऽनुवर्त्तमाने पुनः यन्ग्रहणमुत्तरार्थम् । अत एव "पृष्ठादुपसंख्यानम्" इति वार्तिकेन यनि पृष्ठ्यमिति भवति । यदि च प्रातिपदिकप्रकृतिकानुबन्धमादायापि आत्मनेपदादिव्यवस्थानं तदा यनि ब्राह्मण्यशब्दादाचारक्विपे ब्राह्मण्यति इत्येकमेव रूपं, यञन्तब्राह्मण्यशब्दाच्च "स्वरितञितः कर्त्रभिप्राये" इत्युभयपदे रूपद्वयमिति फलभेदसम्भवेनोत्तरार्थं यन्ग्रहणमिति भाष्यसिद्धान्तव्याघात इति प्रातिपदिकानुबन्धप्रयुक्तात्मनेपदस्याभावबोधनेन पट्वीयते इत्यस्याफलत्वेन "सुपि च" इति पुनरपि व्यर्थमिति वाच्यम् ? अनेकत्र क्लिष्टकल्पनापेक्षया यथापाणिनीयम्मतेः ।

## बहुवचने झल्येदिति—

ननु अत्र सूत्रे बहुवचनग्रहणं किमर्थम् ? "झल्येत्" इत्येतावतैव झलादिसुबव्यवहितपूर्वत्वविशिष्टस्यैत्वमित्यर्थादेव सिद्धेरिति चेन्न ? तथा सति राम इत्यत्र रुत्वस्यासिद्धतया एत्वापत्तेः । नच "प्रत्ययः परश्च" इत्यादिनिर्देशेन "अतोऽम्" इति सूत्रारम्भेण वा क्वचित् त्रिपाद्यास्सापादिकशास्त्रदृष्ट्याऽसिद्धत्वाभावबोधनेन, "नचैङः पदान्तात् परो रुरस्ति" इति भाष्येण, एङ् ह्रस्वादित्यत्र ह्रस्वग्रहणसामर्थ्याद् वा तत्रैत्वाभावसम्पादनेन न दोषः । किञ्च "असौ झल्येत्" इत्यादि वक्ष्यमाणेन न्यासेन वा तत्रैत्वं वारयितुं शक्यत इति वाच्यम् ? तथा सति रामस्येत्यत्र एत्वापत्तेर्दुर्वार-

त्वात् । नच बहुवचनग्रहणाभावे "टाङसिङसामिनादस्याः" इति विन्यस्य ङसो-ऽस्यादेशं विधाय "अतो गुणे" इति पररूपेण सिद्धिः पररूपविधानसामर्थ्याच्च नैत्वापत्तिरिति रामस्येत्यत्रापि न दोषः एवमेव सर्वस्मै इत्यादावपि इति वाच्यम् ? तथा सति अकाराद्यादेशविधाने इदंशब्दान्ङसि अस्येत्यादेरसिद्ध्यापत्तेः । हल्पर-त्वाभावेन "हलि लोपः" इति लोपस्याप्राप्तेः ।

नच तथापि "हलि लोपोऽकः" इति न्यासेन "अनाप्यकः" इत्यत्र च "अन-नसि" इति न्यासेन असम्भिन्नेऽसदृशे चाजादावेव अनादेशादेर्विधानात् न दोष इति वाच्यम् ? तावतापि निर्जरशब्दान्ङसोऽस्यादेशे "जराया जरस्" इति जरसा-पत्तेर्दुर्वारत्वात् ।

**अत्र केचित्**—अतिजरैरिति भवितव्यमित्यादिभाष्येण सन्निपातपरिभाषया तत्र जरसादेशो वारयितुं शक्यते । परन्तु सुपाद् शब्दस्य अशब्देन समासे समा-हारे नपुंसके ङसि सुपादस्येत्यत्र अस्यादेशे भत्वेन "पादः पत्" इति पदादेशा-पत्तिः । नच अतो गुणे इति जातस्य पररूपस्य स्थानिवत्त्वम् ? न पदान्तसूत्रेण तन्निषेधात् इति नैव कर्तुं शक्यतेऽस्यादेश इति रामस्येत्यत्र बहुवचनग्रहणाभावे दोषस्तदवस्थ एवेति तदर्थमस्तु बहुवचनग्रहणमित्यभिदधति ।

ननु अत्र सूत्रे "बहुवचने एत्" इत्येवास्तु न्यासः बहुवचनसुबव्यवहितपूर्व-त्वविशिष्टस्यैत्वमित्यर्थेनैव निर्वाहात् । नच तथा सति रामा इत्यत्र जस्यपि प्रवृ-त्त्यापत्तिरिति वाच्यम् ? झल्ग्रहणाभावे "उतो वृद्धिर्लुकि हलि" इत्यतो हलीत्यनु-वर्त्य बहुवचनहलादिसुबव्यवहितपूर्वत्वविशिष्टस्यात एत्वमित्यर्थेन दोषाभावात् । नच तथा सति रामशब्दादामि नुटि "नामि" इति दीर्घम्प्रबाध्य परत्वादेत्वे रामा-णामित्यत्रैव दोषापत्तेः, दीर्घविधायकन्तु कतीनामित्यादिषु चरितार्थमिति वाच्यम् ? सन्निपातपरिभाषयैव एत्वापत्तिवारणसम्भवात् ।

केचित्तु "उतो वृद्धिर्लुकि झलि" इति न्यासेन तत एव झलोऽनुवृत्त्या सर्वदोष-वारणसम्भव इति वदन्ति तन्न ? तथा तत्र न्यासे रौमि इत्यत्र वृद्धेरभावापत्तेः । तदर्थं मूझलि इति तत्र पाठे रौमि इत्यस्य सिद्धावपि तत एव मूझलः "तुरुस्तुशम्य-मस्सार्वधातुके" इत्यत्राप्यनुवृत्त्यापत्त्या स्तुवीव इत्यादेरसिद्ध्यापत्तेः । **इति चेद्-त्रोच्यते**–तथा व्यर्थं झल्ग्रहणं सन्निपातपरिभाषाया अनित्यतां ज्ञापयति । अत एव सर्वेषाम् इत्यादावेत्वसिद्धिः । अतोऽधिकश्शास्त्रार्थोऽस्माकं तातचरणैर्विरचि-

तायां कौमुदीकल्पलतिकायां सिद्धान्तकौमुदीगुप्तरहस्यप्रकाशिकायां सुपरिष्कृत-न्द्रष्टव्यम् ।

नच लाघवानुरोधेन "बहुवचने झलीक्" इत्यस्तु न्यासः झलादिबहुवचने सुप्यदन्ताङ्गस्येगागम इति च तदर्थवर्णनेन देवादिशब्दाद् भ्यसि अङ्गस्येगागमे आद्गुणे देवेभ्य इत्यादिसिद्धेरिति चेन्न ? तथा सति "सम्बुद्धौ च" इत्यत्रापीक एव सम्बन्धापत्तौ रमाशब्दात् सम्बुद्धौ सौ हे रमा इस् इत्यत्र "वार्णादाङ्गं बलीयः" इति परिभाषया अन्तरङ्गमपि गुणादेशम्प्रबाध्य "ह्रस्वस्य गुणः" इति गुणे "वृद्धि-रेचि" इति वृद्धौ हेरमे इत्यस्यासिद्ध्यापत्तेः । नच "सम्बुद्धौ च" इति विषयसप्तमी तथा च विभक्त्युत्पत्तेः पूर्वमेवेकि गुणे ततः सौ "एङ् ह्रस्वात्" इति सम्बुद्धिलोपे हे रमे इति सिद्धौ न बाधकमिति वाच्यम् ? तथापि "बहुवचने झली ्" इति न्यासे "ओसि च" इत्यत्रापि इक एव सम्बन्धापत्त्या ज्ञानशब्दात् ओसि ज्ञान इ ओसिति स्थिते अन्तरङ्गमपि गुणम्प्रबाध्य "वार्णादाङ्गम्" इति परिभाषया "इकोऽचि विभ-क्तौ" इति नुमि ज्ञानयोरित्यस्यासिद्ध्यापत्तेः । नच समानाश्रये वार्णपरिभाषायाः प्रवृत्तिसिद्धान्तेन प्रकृते व्याश्रयत्वेन तदप्रवृत्त्या न दोष इति वाच्यम् ? इयाय इयेष इत्यादिसिद्धये समानकार्यित्वे तत्प्रवृत्तिस्वीकारात् । अत्रत्यपरिष्कारस्तु परिभाषे-न्दुशेखरे द्रष्टव्यः ।

नचैवमपि ज्ञानयोरित्यादिसिद्धये "बहुवचने झलीट्" इत्येवास्तु न्यासः झला-दिबहुवचनसुबव्यवहितपूर्वत्वविशिष्टादन्ताङ्गात्परस्येडागम इत्यर्थेन इटो विभ-क्त्यवयवत्वेन प्रकृत्यनवयवत्वात् इगन्ताङ्गाभावेन नुमोऽप्राप्त्या ज्ञानयोरिति सिद्धौ न बाधकम् इति वाच्यम् ? सुपादशब्दस्य अशब्देन समासे भ्यसि इटि गुणे भत्वे "पादः पत्" इति पदादेशापत्तेः । नच स्थानिवत्त्वं? न पदान्तेति तन्निषेधादिति ।

नच तथापि सम्पूर्णसूत्रम्परित्यज्य तत्स्थाने "असावेत्" इत्येवास्तु न्यासः "सुपि च" इत्यतः सुपि इत्यनुवर्त्य सुभिन्ने सुप्यदन्ताङ्गस्यैत्वमित्यर्थेन, असाविति पर्युदासेन वा सुप्येव प्रवृत्तिसिद्धान्तेन पचध्वमित्यादावत्रप्यापत्तिविरहात् । एवम् "ओसि च" इति नियमार्थम् अजादौ सुपि चेदोस्यैवेति नाजादिविभक्त्यन्तरे एत्व-प्रवृत्तिः । रामैरित्यादौ च ऐसा तद्बाधो विशेषविहितत्वात् इति वाच्यम् ? तथा सति भ्यामि "सुपि च" इत्यस्य सर्वेषु इत्यादौ च "असावेत्" इत्यस्य सावका-शतया भ्यस्युभयोरपि प्रवृत्तौ परत्वाद्दीर्घापत्तेः ।

केचित्तु रामाभ्यामित्यत्रैत्वापत्तेरिति दूषणमुद्गिरन्ति। अत एव "रामो रामस्य रामाभ्यामित्येतद्दूषणत्रयम्। नागेशदीक्षितप्रोक्तन्तत्रोद्धारान् ब्रवीम्यहम्॥" इत्यभियुक्तोक्तं सङ्गच्छतेतराम्।

**अत्र केचित्**—"स्भ्येत्" इत्यस्तु न्यासः स्च भ्च इत्यनयोस्समाहारः स्भस-ह्म्येकवचने स्भि इति। तथा च "यस्मिन्विधिस्तदादावल्ग्रहणे" इति परिभाषया तदादिविधौ सकारभकारादौ सुप्यदन्ताङ्गस्यैत्वमित्यर्थः। भकारादेर्बहुवचनस्यैव सुपः सत्त्वेन तत्साहचर्यात् सादेरपि तथाविधस्यैव ग्रहणेन राम इत्यादौ सारसायन भक्त इत्यादौ च न दोषः इत्यादिकं विभावयन्ति तन्न? "सुट् तिथोः" इत्यत्र इकारग्रहणेन शास्त्राबोधिताजव्यवहितहल्समुदायस्य साधुत्वाभावबोधनात् तथा-न्यासस्य कर्तुमशक्यत्वात्। स्कोरित्यादिस्तु सौत्रः प्रयोग इति मनोरमायाम्।

**वस्तुतस्तु** लाघवानुसारिभिः "सुट् तिथोः" इत्यत्रापि इकारानुच्चारणे इष्टा-पत्तिं कुर्वाणा न्यासमेनं साधयन्ति। पाणिनिनाऽपि कथन्न तथा कृतमिति तर्कानु-सन्धानेन दोषविरहादिति वदन्ति। यस्मिन् विधिरितिपरिभाषाविचारस्तु मया "वान्तो यि" सूत्रे विशदीकृतो द्रष्टव्यः। सूत्रपरिष्कारस्तु कौमुदीकल्पलतिकाटिप्प-ण्यां मत्कृतायां विशिष्टो द्रष्टव्यः।

## ह्रस्वनद्याप इति—

ननु सूत्रस्यास्य स्थाने "नुण् नद्यापः" इत्येव सिद्धे ह्रस्वग्रहणं व्यर्थम्। न्यासे चात्र योगद्वयम्, अज्ञातपरस्यामो नुडागमः इति भवार्थकः "नुट्" इत्येको योगः। नद्यन्तादाबन्तादज्ञात् परस्यामो नुडित्यर्थकः "नद्याप" इति द्वितीयः। एवञ्च पूर्व-योगेनैव सिद्धौ द्वितीययोगो नियमार्थः, दीर्घात् परस्यामो नुडागमश्चेत् नद्याप एवेति कुत्रापि न दोषलेशः।

नच लिहां दुहामिति हलन्तेऽपि नुडापत्तिः? तथा सति "षट्चतुर्भ्यश्च" इति वैयर्थ्येन हलन्तेभ्यश्चेत् षट्चतुर्भ्य एवेति दोषवैकल्पात्। किञ्च "वसुस्रंसुध्वंस्वन-डुहाम्" इत्यादि निर्देशेन षट्चतुरन्यहलन्तेभ्यस्तदापत्तिवारणसम्भवे ह्रस्वान्तेभ्य-श्चेष्टापत्तेर्ह्रस्वग्रहणन्न कार्यमिति। नच "नुडि"ति पृथग् योगाश्रयणे "ङेराम्" इत्यामि कृते परमप्याटं बाधित्वाऽन्तरङ्गत्वाद् आमो नुट् स्यात् सामान्यापेक्षमन्त-रङ्गं विशेषापेक्षं बहिरङ्गमिति सिद्धान्तात्। तथा च परत्वादाटा नुड् बाध्यते इति ग्रन्थेन, अटि कृते "सकृद्गतौ विप्रतिषेधे"इति न्यायेन नुट् नेति भाष्येण च विरोध

इति वाच्यम् ? तथापि नियमसूत्राणां निषेधमुखेन प्रवृत्तिरिति पक्षे परमप्याटं बाधित्वा नुडापत्तेस्तादवस्थ्यात् । इति चेन्न ? सामान्यापेक्षस्यान्तरङ्गत्वे "त्यदा-दीनामः इत्यस्यान्तरङ्गत्वेन "तदोः स" इति बाधित्वाऽन्त्यस्यात्वेऽर्थादादेरेव सत्वे अनन्त्ययोरित्यस्य वैयर्थ्यापातात ईदृशान्तरङ्गताऽस्वीकारात् ।

परे तु नद्यापः परस्यामो नुडेव नान्यदिति विपरीतनियमस्यापि गमकशू-न्यतया सम्भवे सुडागमस्य पुल्लिङ्गे, आड्याटस्याटां ङिदन्तरे चारितार्थ्यात् गौर्यां रमायां सर्वासामित्याद्यसिद्ध्यापत्तिरिति तन्न ? "नद्याम्मतुप् , भाषायां सदवस-श्रुवः, सर्वासाम्प्रायदर्शनम्" इत्यादिनिर्देशैस्तद्वारणस्य कर्तुं शक्यत्वात् । नच तथापि नियमस्य विशेषापेक्षत्वेन आकार–ईकार–ऊकार–एतदन्ताच्चेत्तर्हि नद्याप एवेति नियमापत्तौ रायाम् नावां गवामित्यादौ नुडापत्ति र्दोष इति । तन्न "गोः पादान्ते" इत्यारम्भात् लोके गोशब्दान्नुटोऽभावकल्पनेऽपि रायामित्यादौ दोषावारणादिति वाच्यम् ? एवं सति "षट्चतुर्भ्यः" इत्याद्यनेकनियमापेक्षया यथापाणिनीयस्यैव मान्यत्वात् ।

## नामि इति—

ननु अत्र "नि" इत्येव न्यासोऽस्तु धारावाहिकया "ढ्लोप" सूत्रेण दीर्घस्य सुपि इत्यस्य च पूर्वसूत्रात् सम्बन्धेन अङ्गाधिकारेण च यस्मिन्विधिरितिपरिभाषया तदादित्वे नादौ सुपि अजन्ताङ्गस्य दीर्घ इति तदर्थवर्णनेन च रामाणाम् कतीनाम् इत्यादौ दीर्घसिद्धेः । नच हरिणा भानुनेत्यादौ दीर्घापत्तिः "आङो नाऽस्त्रियाम्" इत्यस्य स्थाने "आङि नुगस्त्रियाम्" इति न्यासेन नुकोऽङ्गावयवत्वविधानस्वीकारात् । नच तथा सति प्रकर्विणेत्यादौ नकारस्य विभक्तिस्थत्वाभावेन णत्वानापत्तिः, प्राति-पदिकान्तत्वादेव "प्रातिपदिकान्तनुम्" इति णत्वसिद्धिस्तु न ? गर्गभगिनी इत्यादौ णत्वाप्रसक्तये उत्तरपदं यत् प्रातिपदिकं तदन्तस्यैव नस्य णत्वमित्यादेरर्थस्य अभी-ष्टत्वात् इति वाच्यम् ? तथापि "आङि नुमस्त्रियाम्" इति न्यस्य नुम्विधानेन नुम्त्वादेव "प्रातिपदिकान्तनुम्" इति णत्वासिद्धेः । इति चेन्न । प्रियास्तिस्रो यस्येति विग्रहे तृतीयैकवचने प्रियत्रि आ इत्युपस्थितौ नुम्तिस्रादेशयोः प्राप्तयोः परत्वात् नुमि निर्दिश्यमानस्य नुमा व्यवधानात् निर्दिश्यमानपरिभाषया तिस्रादेशो न स्यादिति बृहद्दोषात् ।

यत्तु "अङ्गात् कल्याणे" इति नाप्रत्यये अङ्गना इत्यत्र दीर्घापत्तिः तन्न ? "वि-

नञ्भ्यांनानाञौ" इति सूत्रे वृद्धयर्थं कृतस्य ञित्वस्येदानीं व्यर्थीभूय नकारादौ तद्धिते दीर्घो न भवतीति ज्ञापकत्वाददोषात्। एवमेव "सुपि च" इत्यस्यानन्तरं "नि" इति न्यासस्य स्थापनान्नकारादौ सुपि इत्यर्थकरणात् "दुग्वोर्दीर्घश्च" प्वादीनां ह्रस्वः" इत्यादिदीर्घह्रस्वविधानसामर्थ्यात् सुनोतीत्यादिषु सिनोप्रास इत्यादि कृदन्तेषु च नानेन दीर्घ इतिकल्पनात्।

वस्तुतस्तु "आङो नुमस्त्रियाम्" इति न्यासे प्रियत्रिणा इत्यत्र "सावेकाचः" इत्यस्याप्रवृत्त्या स्वरानापत्तेरीदृशा न्यासा न विधेयाः।

ननु "नामि" इति विहाय "आमि" इत्येवास्तु कृताकृतप्रसङ्गविज्ञानात् दीर्घस्य नित्यत्वेन परमपि "ह्रस्वनद्यापः" इति नुटं "परनित्यान्तरङ्गापवादानाम्" इतिन्यायेन प्रबाध्य दीर्घे ह्रस्वग्रहणेन व्यर्थीभूतेन भूतपूर्वह्रस्वान्तत्वमादाय नुडिति व्याख्यानेनैव रामाणां कवीनां हरीणामित्यादिसिद्धेः। नच चर्मणामित्यत्र दीर्घापत्तिः ? "नामि, नोपधायाः" इत्यनयोरङ्गाधिकारे पाठं कुर्वतः पाणिनेः अत्र दीर्घाभाव एवाभिप्रायः प्रतीयते। अत एव अङ्गस्येति किं चर्मणाम् इति शेखरे। एवञ्च अङ्गाधिकारे पाठवैयर्थ्येन षट्संज्ञकातिरिक्तस्य नामि न दीर्घ इति कल्पनया चर्मणामित्यादौ दीर्घाभावसिद्धौ न्यासोऽयम्भाष्यसम्मतोऽदुष्ट एवेति।

एवम् "नामि" इत्यस्य स्थले "नुटि" इत्येवास्तु नुटि परे अजन्ताङ्गस्य दीर्घ इत्यर्थेन निर्वाह इति चेन्न। नुडादिप्रत्ययत्वस्य सुप्त्वव्याप्यत्वाभावेन "नलोपः सुप्स्वर" इति नलोपासिद्धत्वाप्राप्त्या पञ्चानाम् इत्यत्र दीर्घविधायक "नोपधायाः" इति लाघवात् त्याज्यमेवेति वाच्यम् ? तथासति नृनयशब्दयोस्समासे आचारक्विबन्तात् कर्तृक्विपि अल्लोपयलोपयोः नृन्शब्दस्य यशब्देन समासे नलोपे आचारक्विबन्तात् कर्तृक्विपि अल्लोपयलोपादिषु "नलोपः सुप्" इति नलोपस्यासिद्धत्वात्तुकोऽभावे नृआमितिस्थिते आम्त्वस्य "कास्प्रत्ययात्" इति विहिते आम्यपि सत्त्वेन सुप्त्वव्याप्यत्वाभावान्नलोपासिद्धत्वविधायकाप्राप्त्या नुटि नाम्त्वस्य सुप्त्वव्याप्यत्वेन नलोपस्यासिद्धत्वात् "नृच" इति दीर्घाभावे "नोपधायाः" इति दीर्घे नृणामित्येकं रूपमिदानीं "नृच" इति वैकल्पिकदीर्घापत्तेः। एवमन्येऽपि न्यासाः परिदूष्या इति।

## इण्कोः इति—

ननु अधिकारसूत्रमिदं व्यर्थम् आदेशस्य प्रत्ययावयवस्य च अपदान्तस्य सस्य

मूर्धन्य इतिमात्रार्थकेन "आदेशप्रत्यययोः" इत्यनेनैव सर्वेष्टसिद्धेः । नच रामस्येत्यत्र स्थानिवत्त्वेन स्यादेशे प्रत्ययत्वमानीय षत्वापत्तिरिति वाच्यम् ? "टाङसिङसाम्" इति सूत्रेण प्रक्रियालाघवाय ष्यादेशे एव विधातव्ये स्यसकारोच्चारणसामर्थ्यादापत्तिविरहात् ।

नच तत्र सूत्रे षत्वविशिष्टपाठे ष्टुत्वापत्तिरिति वाच्यम् ? "तोःषि" इति निषेधात् । नच "षःप्रत्ययस्य" इतीत्वापत्तिस्स्यादिति वाच्यम् ? उच्चारणसामर्थ्यादेव तद्बाधसम्भवात् । नचैवं सामर्थ्यात् षत्वबाधकल्पने अमुष्य इत्यत्र षत्वानापत्तिः ? "अमुष्यायणामुष्यपुत्रि" इति वार्त्तिकनिर्देशेनैव तत्र तत्त्वसिद्धेः । नच "इण्कोः" इत्यधिकारसूत्राभावे हे देव स्येत्यत्रापि षत्वापत्तिरिति वाच्यम् ? "सात्पदाद्योः" इति तत्त्वनिषेधात् । अश्वस्यतीत्यादौ च सुकः प्रत्ययानवयवत्वाददोषः । नच रमत इति रमाः "सर्वधातुभ्योऽसुन्" इत्यसुनि रमसं पातोच्छतीति वा रमस्यः इति आतोऽनुपसर्गे के ततः स्वार्थिकेऽणि रामस्यः तत्सम्बुद्धौ हे रामस्य इत्यत्र षत्वापत्तिरिति वाच्यम् ? "अपदान्तस्य मूर्धन्य" इत्यधिकारस्य षत्वविधायके सत्वादत्र च सस्य पदान्तत्वेन षत्ववारणसम्भवात् । इति चेन्न ? "नः क्ये" इति सूत्रेण क्यचि क्यङि च नान्तस्यैव पदत्वनियमेन इह पदत्वबाधात् षत्वापत्तेर्दुर्वारत्वादन्तर्वर्त्तिविभक्त्या पदत्वेन दोषवारणस्यायोग्यत्वात् । अत एव कौमुद्याम् इण्कोः किं रामस्येति संगच्छते ।

**परेतु**—"टाङसि" इति सूत्रे ष्यादेशविधाने राद्धान्ते जारस्य अट् जारस्याट् "षष्ठ्या आक्रोशे" अलुकि ततो णिचि टिलोपे क्विपि णिलोपे जाराः जारसौ जारस इति भवति इदानीं षस्य जश्त्वे जारट् जारषौ इति फलभेदेन तादृशन्यासस्याकर्त्तव्यत्वात् । शुद्धरामशब्दात् रामस्येत्यत्रैव दोषः, सकारोच्चारणसामर्थ्यस्योपक्षीणत्वेन तत्र षत्वापत्तेर्वारयितुमशक्यत्वादित्येव तात्पर्यं दीक्षितानामिति वदन्ति ।

## आदेशप्रत्यययोः—

ननु "इण्कोः" इति सूत्रस्यैव विधायकत्वमङ्गीकृत्य "शासिवसि" इति सूत्रवैयर्थ्येन सान्तस्य धातोस्सस्य षत्वं चेत्तर्हि शासिवसिघसीनामेवेति नियमात् सुपीः सुपिसौ इत्यादौ वारणसम्भवादिति चेन्न ? निष्ठायामनिटां धातूनां चेत्तर्हि शास्यादीनामेव इति नियमस्यापि सम्भवे नियमानाक्रान्ततया सुपिसावित्यादौ दोषताद-

वस्थ्यात् । मम तु आदेशभूतस्य प्रत्ययावयवस्य वा सकारस्य षत्वमिति सिद्धान्तान्न दोष इत्यलम् ।

## जराया जरस् इति—

ननु अत्र अर्द्धमात्रालाघवसम्भवेन "जराया असुङ्" इति न्यासेनैव सर्वेष्टसिद्धौ कथं गुरुभूतन्यासादरः। **अत्र शेखरकाराः** असुङि ङकारोकारयोरित्संज्ञालोपयोः सर्वादेशविधायकम् "अनेकाल्शित्" इति प्राप्तमपि प्रबाध्य "अलोऽन्त्य" इति तदपि प्रबाध्य "ङिच्च" इति अन्तादेश एव भवतीति कल्पने विशिष्टज्ञानगौरवापत्तेर्न्यासस्य समुपेक्षणात् ।

**अपरे तु** तथा न्यासे जराशब्दादाचक्षाणणिचि "णाविष्ठवत्" इति टिलोपे ततः क्विपि णिलोपे च एकदेशविकृतन्यायेन आनुमानिकस्थान्यादेशभावेन वा जर्शब्दे जराशब्दत्वमानीय प्राग् जरसादेशे जरा जरसौ जरस इति । अधुना असुङि "ङिच्च" इति शास्त्रप्रवृत्त्या जसौ जस इति रूपापत्तिः । नच "अचः परस्मिन्" इति णिलोपस्य स्थानिवत्त्वेन विभक्तिपरत्वाभावाद् राद्धान्तेऽपि जरसादेशस्तत्र नेष्ट इति वाच्यम् ? क्वौ लुप्तं न स्थानिवदित्यर्थोऽवश्यं वाच्यः, अन्यथा वेभिद्यतेः क्विपि अल्लोपे यलोपे च वार्त्तिकस्यास्य प्रवृत्त्याऽल्लोपस्य स्थानिवत्त्वाभावे बेभिदि ब्राह्मणकुलानीह "नपुंसकस्य झलचः" इति झलन्तलक्षणनुमः प्रसङ्गात् । क्वौ विधिम्प्रति इत्यस्योदाहरणन्तु लवमाचक्षाणो लौः अत्र णिचि यष्टिलोपः यश्च क्वौ णिलोपः तदुभयं "च्छ्वोश्शूठ्" इति वकारस्योठि क्विनिमित्तके कर्त्तव्ये न स्थानिवत् । तथाच "एत्येधत्यूठ्" इति वृद्धया सिद्धिः । इदञ्च नापूर्वं वार्त्तिकं किन्तु "क्विलुगुपधात्वचङ्परणिह्रासकुत्वेषूपसंख्यानम्" इति वार्त्तिकस्यैकदेशानुवादभूतमिति । एवंविधव्याख्यानेन वार्त्तिकमिदं क्वाचित्कमितीह प्रवृत्त्यनापत्तिरिति वाच्यम् ? जरसिति गुरुभूतादेशकरणसामर्थ्येन इह तदाश्रयणे बाधकविरहात् । इति चेन्न ? रका सिद्धे आकारोच्चारणमन्यतो विधानार्थमिति "आरगुदीचाम्" इति सूत्रभाष्येण आबन्तप्रकृतिकणिचोऽनभिधानकल्पनात् । अन्यथा तत्रापि तादृशहलन्तगोधूशब्दे फलभेदस्य स्पष्टतया जडस्यापत्यं जाडार इत्यादिफलानुधावनस्य भाष्यकृतोऽसंगत्यापत्तेः । एवञ्च हलन्ततादृशजर्शब्दस्यैवाभावेन तादृशोक्तेः परास्तत्वात् ।

नच जराशब्दस्य ऋशब्देन समासे गुणे जरर् तत्र पूर्वान्तवत्त्वेन जराशब्द-

स्वमानीय असुङि दीर्घे जरासाविति, राद्धान्ते जरसाविति दोषसम्भवात् शेखरोक्तिः कथमिति वाच्यम् ? असुङादेशविधानेऽपि "अतो गुणे" इति पररूपेण जरसाविस्यस्य इदानीमपि निर्वाधत्वात्। आकारोच्चारणसामर्थ्यात् पररूपबाधकल्पनन्तु न श्रेयः ? आबन्तजराशब्दादपि अकारोच्चारणाभावे जरसावित्याद्यसिद्धिप्रसंगात्।

**अन्ये तु** जरामततीति जरात् ततो णिचि क्विपि टिलोपे जर् इति तत्र सुङ्-जरसोः फलभेदात् न्यासोऽयुक्तः। अत्र टिलोपस्य स्थानिवत्त्वाभावोऽज्झलादेशत्वात्। णिलोपस्यापि च तदभावः "क्वौ लुप्त" न्यायादिति ब्रुवते।

## सुडनपुंसकस्येति—

ननु अत्र सूत्रे प्रत्यासत्तिन्यायात् औटष्टकारस्यानन्यार्थत्वाच्च सुडिति औटष्टकारेण प्रत्याहारः। प्रत्ययाप्रत्यययोः प्रत्ययस्यैव ग्रहणादत्र न सुडागमस्य ग्रहणम्। ननु अत्र लाघवात् अनपुंसकग्रहणम्परित्यज्य "सुट्" इत्येव न्यासोऽस्तु नपुंसके स्वमोः सर्वनामस्थानत्वेऽपि दोषादर्शनात्। अनपुंसकग्रहणाभावे सर्वनामस्थानपर्युदासात् ज्ञाने इत्यत्र "यस्येति" भत्वाभावेन लोपाभावे "औङः श्याम् प्रतिषेध" इति वार्तिकाकरणरूपं लाघवम्परमनुकूलम्। नच तथा सति ज्ञानमित्यादौ "नपुंसकस्य झलच" इति प्रसंगो नुमस्स्यादिति वाच्यम् ? सन्निपातपरिभाषयैवाङ्गस्य नुम् न भवतीति कल्पनेनादोषात्।

नच तथासति प्रियक्रोष्टुनो इत्यत्र सर्वनामस्थानत्वात् तृज्वद्भावस्यानिष्टस्यापत्तिरिति वाच्यम् ? "वृद्ध्यौत्वतृज्वद्भाव" इति वार्त्तिकेन तृज्वद्भावम्प्रबाध्य पूर्वं नुमि दोषविरहात्। वार्त्तिकेनानेन गुणं बाधित्वा पूर्वं नुम्येव प्रियतिसृणी इत्यत्रापि न दोषः। नच तथापि अह्नी अहनी इत्यत्र अनपुंसकग्रहणाभावे भत्वाभावेन "विभाषा ङिश्योः" इति सूत्राप्रवृत्त्या दीर्घापत्तिरिति वाच्यम् ? साम्प्रतं औङ्स्थानिकश्यादेशे "यस्येति" लोपाप्रवृत्त्या "औङःश्याम्" इति वार्त्तिकस्य वैयर्थ्येन शीपरे भत्वप्रयुक्तकार्याणि भवन्त्येवेति ज्ञापनाद् "विभाषा ङिश्योः" इत्यत्र शीग्रहणेन भत्वाभावेऽपि शीपरेऽनोऽकारस्य लोप इति ज्ञापनाद् वा अदोषात्। नच तथापि वारिणी इत्यादौ "सर्वनामस्थाने" इति दीर्घापत्तिरिति वाच्यम् ? तत्र "सर्वनामस्थाने चाऽसम्बुद्धौ" इति न्यासेन दीर्घस्य शीभिन्ने विधानात्। नच अनपुंसकग्रहणाभावे सुपथी इत्यादौ भत्वप्रयुक्तान्यन्यानि कार्याणि कथं स्युरिति वाच्यम् ? असति बाधके प्रमाणानां सामान्ये पक्षपातन्यायेन भत्वावच्छिन्नोद्दे-

श्यकक्कार्यमात्रस्य "विभाषा ङिश्योः" इति कथितशीग्रहणवैयर्थ्येन ज्ञापनात्। नच ज्ञाने इत्यादौ सर्वनामस्थानत्वापत्त्या "नपुंसकस्य झलचः" इति नुमापत्तिः ? तथा सति "सुडनपुंसकस्य" इति सर्वथा परित्यज्य "सुडशी" इति न्यासस्यैवादरात्। शीभिन्नस्य सुटः सर्वनामस्थानसंज्ञेति तदर्थाच्च ज्ञाने इत्यत्र सर्वनामस्थानत्वप्रयुक्तनुमः, लोम्नी अह्नी इत्यादौ दीर्घापत्तेश्च सुवारत्वात्। नच कर्तृणी इत्यादौ "अप्तृन्" इति दीर्घापत्तिरिति वाच्यम् ? तत्रापि दीर्घविधायके "सर्वनामस्थाने" इति सूत्रात् असम्बुद्धौ इत्यस्यानुवृत्तेरदोषात्। नच तथा सति गमकाभावात् शीत्वेन "जसःशी" इति कृतस्यापि श्यादेशस्य निषेधकोटौ प्रवेशापत्तौ इमे इत्यादौ सर्वनामस्थानत्वाभावेन "ऊडिदम्" इति स्वरानापत्तिरिति वाच्यम् ? तथापि "एकादेश उदात्तेन" इत्युदात्तत्वसिद्धेरप्रत्यूहत्वात्।

नच इमे इत्यत्र सर्वनामस्थानत्वाभावे "यस्येति च" इति लोपापत्तिः इति वाच्यम् ? तस्य नदीसंज्ञकेकारे लोप इत्यर्थं स्वीकृत्य इहाप्रवृत्तेः। नच स्त्रियां सर्वाशब्दादौङौटोः श्यादेशे भवदुक्तरीत्या सर्वनामस्थानत्वाभावात् भत्वेन सर्वे इत्यादौ "यस्येति च" इत्यल्लोपापत्तिरिति वाच्यम् ? नदीसंज्ञकेकारे इत्यादि दत्तोत्तरत्वात्, "औङः श्याम्" इत्यत्र ओङ्ग्रहणम्परित्यज्य "श्याम् प्रतिषेध" इत्येवं न्यासेन वादोषात्। नच अतिजरसं कुलमित्यत्र "नपुंसकस्य झ" इति नुमापत्तिः ? सन्निपातपरिभाषयाऽपि तद्वारणसम्भवात्। नच अतिजरसं कुलम्पश्य इत्यत्र झलन्तलक्षणनुमापत्तिः ? "शि सर्वनामस्थानम्" इत्यस्याकर्त्तव्यत्वेन "नपुंसकस्य झलचश्शौ" इति न्यासेन वारणात्। न च "शि सर्व" इति सूत्राभावे ज्ञानानि इत्यादौ दीर्घः कथमिति वाच्यम् ? "सर्वनामस्थाने चासम्बुद्धौ शौ" इति न्यासेनादोषात्। एवम् "उगिदचां सर्वनामस्थानेऽधातौ शौ" इति न्यासेन प्रत्यञ्चीत्यादावपि नुम्वारणसम्भवः। अस्मादेव 'नपुंसकस्य झल" इत्यत्र शावित्यनुवृत्तेस्तत्र शाविति न कार्यमिति लाघवात्। नचैवमपि शसि सुपन्थानीत्यस्यासिद्धिप्रसङ्गः "भस्य टेर्लोपः" इति लोपादिति वाच्यम् ? टेर्लोपे कृते "थोन्थ" इत्यत्र "थोन्था" इति न्यासेनादोषात्। नच शसि ज्ञानानीत्यादौ दीर्घानापत्तिरिति वाच्यम् ? "सर्वनामस्थानश्योरसम्बुद्धौ" इति न्यासेनादोषात्।

**परेतु** बहुपुम् इत्यत्र "पुंसोऽसुङ्"इत्यसुङमाशङ्क्य ज्ञाने इत्यत्र लोपाप्राप्त्या "औङः श्याम्" इति वार्त्तिकारम्भेण नपुंसके सुटो न सर्वनामस्थानसंज्ञेति ज्ञापनात्

सर्वानपि दोषान् प्रसक्तान् वारयितुं कामयन्ते । परन्त्वनेकत्र कष्टापेक्षया यथान्यासमेव रम्यम् ।

## स्वादिष्वसर्वनामस्थाने इति—

ननु अत्र लाघवात् "शसादिषु" इत्येव न्यासोऽस्तु कप्प्रत्ययावधिषु शसादिषु पूर्वम्पदसंज्ञमिति तदर्थः । अस्यैव च "यचि भम्" इत्यत्राप्यनुवृत्त्या यकारादिष्वजादिषु च कप्रत्ययावधिषु शसादिषु परतः पूर्वम्भसंज्ञम् भवतीत्यर्थः । एवञ्च वने इत्यादौ शीपरे शसादिपरत्वाभावेन भत्वाभावेन "यस्येति च" इति लोपाप्रवृत्त्या "औङः श्याम्" इति वार्त्तिकञ्च न विधेयमिति परमं लाघवम् । कतरदित्यत्र च कतरशब्दस्याभावेऽपि अदड्डादेशस्य डित्वादभस्यापि टेर्लोपव्याख्यानात् । नच तथापि "शसादिषु" इति न्यासे अह्नी अहनी इत्यादौ शीपरे भत्वाभावेन "विभाषा ङिश्योः" इत्यस्याप्रवृत्त्यापत्तिरिति वाच्यम् ? तत्र शीग्रहणसामर्थ्यादभस्यापि श्यां तेन लोपज्ञापनात् । असति बाधकन्यायेन एतेन शीग्रहणवैयर्थ्येन भत्वावच्छिन्नोद्देश्यककार्यमात्रस्य शीपरे ज्ञापनेन सुयूनि इत्यादौ टिलोपसम्प्रसारणादिसिद्धेः । इति चेन्न ? अहन्शब्दाच्छसि अहानीत्यादौ शसः श्यादेशे शिपरे भत्वात् नान्तलक्षणदीर्घम्प्रबाध्य "अल्लोपोऽन" इत्यल्लोपापत्तेः । "स्वादिषु" इत्येको योगः, असर्वनामस्थाने यचि, इति द्वितीयः ततो "भम्" इति "न लुमता" सूत्रभाष्येण सह विरोधाच्च यथापाणिनीयस्यैवादरणीयत्वात् ।

## अल्लोपोऽन इति—

ननु अत्र "अनो न" इत्येवास्तु न्यासः, अङ्गावयवोऽसर्वनामस्थानयजादिस्वादिपरो योऽन् तस्य नादेश इत्यर्थेनैव सर्वेष्टसिद्धेः। नच तथा न्यासे "अलोऽन्त्यस्य" इति परिभाषयाऽन्त्यस्यादेशापत्तिरिति वाच्यम् ? "नानर्थकेऽलोऽन्त्यविधिरनभ्यासविकारे" इति परिभाषया तन्निषेधात् । एवञ्च नकारोत्तरमकारस्योच्चारणमात्रप्रयोजनत्वेन निर्दिश्यमानपरिभाषयैव सर्वेष्टसिद्धेः । नच यथापाणिनीये प्रियाष्टन्शब्दाच्छसि अल्लोपस्य स्थानिवत्त्वात् राद्धान्ते ष्टुत्वं न भवति, इदानीं आदेशस्य अज्झलादेशतया स्थानिवद्भावप्रतिबन्धक "पूर्वत्रासिद्धीये न स्थानिवत्" इति प्रतिबन्धकस्य "तस्य दोषः संयोगादिलोपलत्वणत्वेषु" इति स्थानिवद्भावविधायकस्याप्राप्तेरिति दूषणम् वाच्यम् ? तथापि कार्यकालपक्षमाश्रित्य अधुनापि बहिरङ्गपरिभाषया

नादेशस्यासिद्धत्वात्, शेखरादिषु तादृशामनभिधानस्य स्पष्टत्वाददोषाद् वा । **इति चेदत्रोच्यते**—प्रपूर्वकादव प्राणन इति धातोः कर्त्तृक्विपि निष्पन्नप्राणशब्दाच्छसि "अनितेः" इति णत्वस्यासिद्धतयाऽनो नादेशापत्तेः । राद्धान्ते तु "अल्लोप" इत्यत्र अदिति तपरकरणात् ह्रस्वाकारवत एव ग्रहेण अत्र प्रवृत्त्यभावान्न दोषः इति । नच प्र अन् इति स्थिते सवर्णदीर्घे अन एवासत्त्वेन न प्रवृत्त्यापत्तिः, "वार्णादाङ्गं बलीयः" इति परिभाषया दीर्घात् प्रागेव लोपेऽप्यविशेषादिति वाच्यम् ? दीर्घात् प्राग् लोपेऽपि तत्र "अनुनासिकस्य क्विझलोः" इति दीर्घेण आन एव सत्त्वाद् वार्णपरिभाषायाः समानाश्रये एव प्रवृत्तिस्वीकाराच्च । एवञ्च कृतेऽपि दीर्घे एकदेशविकृतन्यायेनान्त्वाद् दोषापत्तेर्युक्तत्वाद् यथान्यासमेव सुकरमिति ।

## नलोपः प्रातिपदिकान्तस्य—

ननु एतत्सूत्रस्थाने "नलोपोऽतिङः" इति न्यासोऽस्तु । "पदस्य" इत्यस्याधिकारात् तिङन्ततदादिभिन्नं यत् पदन्तदन्तस्य नस्य लोप इत्यर्थेन सर्वेष्टसिद्धेः । अहन्नित्यत्र तिङन्ततदादिभिन्नत्वाभावेनादोषात् "अर्थवत्" सूत्रेऽधातुग्रहणाकरणस्य अत्र च नलोपविधायके प्रातिपदिकादिग्रहणाकरणस्य च विशिष्टलाघवस्यानुसम्भवात् । नच "द्वौ नञौ च समाख्यातौ पर्युदासप्रसज्ज्यकौ । पर्युदासस्सदृग्ग्राही प्रसज्ज्यस्तु निषेधकृत्" इत्युक्तेरत्र पर्युदासाश्रयणेन अतिङ इत्यनेन तिङन्ततदादिभिन्नतत्सदृशधातुविहितप्रत्ययान्तस्यैवेत्यर्थे बलिन्शब्दान्मतुपि बलिमद् गृहमित्यादौ बलिनो नकारस्य लोपानापत्तिरिति वाच्यम् ? लक्ष्यानुरोधेन प्रसज्ज्यप्रतिषेधस्यैवेहाश्रयणात् । पर्युदासाश्रयणे "टाङसिङसाम्" इति भाष्यविरोधाच्च ।

नच पूर्वस्मिन् इत्यादौ लोपापत्तिः, अतिङन्तत्वात् राद्धान्ते तु प्रातिपदिकत्वाभावान्नेति ? उच्चारणसामर्थ्यात् तादृशेषु लोपाभावस्य सुवचत्वात् । नच पूर्वस्मिन् इत्यस्यानुकरणे मतुपि नलोपे च पूर्वस्मिमान् इत्यत्र "ह्रस्वनुड्भ्याम् मतुप्" इति उदात्तत्वं न भवति "नलोपः सुप्" इति नलोपस्यासिद्धत्वात् । केवलस्म्यादेशविधाने नकारविशिष्टविधानाभावे नलोपासिद्धत्वादेरभावेन स्वरापत्तिरिति नकारोच्चारणस्य स्वरवारणरूपफलान्तरसत्त्वेन तदुच्चारणसामर्थ्यान्नलोपवारणं कर्त्तुमशक्यमिति । नच नकारोच्चारणपक्षेऽपि "स्वरविधौ व्यञ्जनमविद्यमानवत्" इति सिद्धान्तेन नकारस्याविद्यमानवद्भावेन मतुप उदात्तता इष्टैव तेनेति वाच्यम् ? तादृशप्रकारेण अक्षण्वता शीर्षण्वता इत्यादौ नकारस्याविद्यमानवत्त्वेनैव सिद्धौ तदर्थं

"ह्रस्वनुड्भ्याम्" इति सूत्रीयनुड्ग्रहणवैयर्थ्यापत्त्या स्वरविधौ स्वरत्वव्याप्यधर्मघटितधर्मावच्छिन्नविषयत्वप्रतिबन्धकं व्यञ्जनं न भवतीत्यर्थस्वीकारात् प्रकृतेऽविद्यमानवद्भावविधायकस्य तस्याप्रवृत्तेः। अत एव तादृशाविद्यमानवद्भावसंकोचकं "हल्स्वरविधौ व्यञ्जनमविद्यमानवत्" इति परिभाषान्तरारम्भः इति वाच्यम् ? मतुप उदात्तत्वविधायके "ह्रस्वनुड्भ्याम्" इत्यत्र "अन्तोदात्तादुत्तरपदात्" इति सूत्रादनुवर्त्ततेऽन्तोदात्तपदम् ह्रस्वेण विशिष्यते। अत एव वायुमानित्यादौ उदात्तात् ह्रस्वात् परत्वेन मतुप उदात्तता। वसुशब्दस्याद्युदात्तत्वेन वसुमानित्यादौ च न तत्प्रवर्त्तते। एवञ्च "अनुदात्तौ सुप्पितौ" इत्यनेन पूर्वस्मिन् इत्यादौ स्मिनोऽनुदात्तत्वेन मतुप उदात्तत्वाप्राप्त्या दोषवारणस्य सुतरां जायमानत्वात्।

किञ्च "अभिव्यक्तपदार्था ये स्वतन्त्रा लोकविश्रुताः" इति भाष्यसिद्धान्तेन अनुकरणस्यासत्त्वात् "प्रकृतिवदनुकरणम्" इत्यस्यानित्यत्वाद् वा एतादृशेषु दोषदानस्यायोग्यत्वात्। नच देवानित्यादौ नलोपापत्तिः। नच "तस्माच्छसो नः पुंसि" इति नत्वविधानसामर्थ्याल्लोपाभावश्शक्य इति वाच्यम् ? निर्विसर्गकरूपसाधनार्थन्तस्यावश्यकत्वात् इति वाच्यम् ? लोप एव विधातव्ये नत्वविधानसामर्थ्याद् वारणसम्भवात् प्रातिपदिकादिग्रहणाकरणरूपलाघवेन फलमुखगौरवस्यादोषाधायकत्वात्।

**अपरेतु** "तस्माच्छासो नुम् पुंसि" इति न्यासं कृत्वा नलोपाभावं समीहन्ते। "प्रथमयोः पूर्वसवर्ण" इति दीर्घेऽपि "अचः परस्मिन्" इति स्थानिवत्त्वेन शसः परत्वस्योपपादयितुं शक्यतया न सूत्रवैयर्थ्यम्।

**परेतु** तथा स्थानिवत्त्वेन शसः परत्वनिर्णयेऽपि पूर्वसवर्णदीर्घात् परत्वं शसः कथमित्यापत्तिभिया "तस्माच्छसो नःपुंसि" इत्यत्र "शसो नुम् पुंसि" इति न्यासं कृत्वा "अकः सवर्णे" इत्यतोऽक इत्यनुवर्त्त्य अकः परस्य शसो नुम् भवतीति तदर्थवर्णनेन दोषानुद्दिधीर्षन्तीत्यलम्।

## दीर्घाज्जसि च—

अत्र "दीर्घाज्जि च" इति विन्यस्य "नादिचि" इति सूत्रात् पूर्ववदेवेचीत्यनुवर्त्त्य "यस्मिन् विधिः" इति तदादित्वे दीर्घात् जकारादौ प्रत्यये इति च परे न पूर्वसवर्णदीर्घः इत्यर्थेनैव सिद्धिरस्तु। न च अनुबन्धविनिर्मुक्तस्यैव पदार्थस्योपस्थितिर्भवतीति सिद्धान्तेन लक्ष्ये अनुबन्धविनिर्मुक्तस्य असित्यादेरेवोपस्थित्या जकारादि-

प्रत्ययालाभात् कथमिति वाच्यम् ? आरम्भसामर्थ्यादौपदेशिकजकारादित्वस्य ( भूतपूर्वगतेरिह ) समाश्रयणात्। **इति चेत् अत्रोच्यते**—यत्किञ्चिन्मात्रालाघवलिप्सया सूत्रसामर्थ्याश्रयणादेरसह्यगौरवात् पाणिनीयसमादरात् ।

## जसि चेति—

ननु "जसि च जुसिच"इतिसूत्रद्वयस्य स्थाने "जिति च" इत्येवास्तु "क्सस्याचि"इति सूत्रादचीत्यनुवर्त्त्य "इको गुणवृद्धी" इति इक्पदोपस्थित्या तदादिविधौ च अजादौ जिति परे इगन्ताङ्गस्य गुण इति च तदर्थेन हरयोऽजागरूः अजुहवुरित्यादौ न दोषः । नच हरय इत्यादौ गुणस्य चारितार्थ्यात् "क्ङिति च" इति निषेधात् अजुहवुरित्यादौ गुणो न स्यादिति वाच्यम् ? जुसि जकारोच्चारणसामर्थ्येन तत्र गुणनिषेधस्याभावकल्पनात् । नच तथा सति गौर्य्य इत्यादौ दोषस्तदवस्थ एवेति तादृशसामर्थ्याश्रयणन्न कर्त्तुं शक्यते इति अजुहवुरित्यादौ दोषस्तदवस्थ इति वाच्यम् ? तथा सति "दीर्घाज्जसि च" इति सूत्रे जस्ग्रहणसामर्थ्यात् दीर्घान्तस्य जसि गुणो न भवतीति कल्पनेन गौर्यादौ दोषवारणस्य शक्यत्वात् । न च गौरीयतेर्हूयतेश्च क्विपि अल्लोपयलोपयोः जसि अल्लोपस्य स्थानिवत्त्वेन गुणाप्राप्त्या प्राप्तप्रथमयोरिति दीर्घबाधनेन चारितार्थ्यम् । अत्र च स्थानिवद्भावो न भवति ? पूर्वसम्बन्धवत्येव तत्प्रवृत्तिरिति वाच्यम् ? पूर्वोपस्थितिनिमित्तकत्वरूपान्तरङ्गत्वेन प्रातिपदिकसंज्ञाकाल एव "एरनेकाच" इति "ओस्सुपि" इत्यादियण्विधायकैरेव बाधाददोषात । नच निरुक्तोदाहरणद्वये यणियङोरपवादत्वात् "एरनेकाचः" इति, ततोऽपि अन्तरङ्गत्वात् "इको यणि"ति, ततोऽपि अपवादत्वात् "प्रथमयोः" इति ततोऽपि परत्वादियङिति चक्रकापत्तिरिति वाच्यम् ? "इको यण्" इति यणं बाधित्वा "वार्णादाङ्गमि"ति न्यायेन "एरनेकाचः" इत्यादिप्रवृत्तेर्निर्बाधत्वात् ।

नच तथापि बुद्धिचुञ्चुरित्यादौ "चुटू" इति चकारस्येत्संज्ञापत्तिवारणाय चुञ्चुपश्चकारस्य च रक्षणाय 'जकारादौ चुञ्चुप्चणपौ' इत्युक्तिः कथम् इति वाच्यम् ? अन्तःस्थयकारस्यैव "लोपोव्योः" इति लोपेन 'यकारादी तौ' इति पाठस्यैव भाष्यसम्मतत्वात् । नच यथान्यासे फलाभावात् जकारस्य नेत्वम्पटुजातीय इत्यादौ जातीयरः अधुना तु गुणरूपफलस्यैव सत्त्वेन जकारस्येत्त्वं स्यादिति वाच्यम् ? तत्रापि "लोपो व्योः" इति लोपेन यकारादित्वस्वीकारात् । नच "स्वंरूपम्"इति शास्त्रबलेन जिच्छब्दस्य ग्रहणापत्तौ हरिजिदित्यत्रापत्तिर्हरय इत्यत्र चानापत्तिर्गुण-

स्येति वाच्यम् ? "भूवादयः" इत्यादिनिर्देशेन (तत्र गुणदर्शनात्) जिच्छब्दस्या-ग्रहणबोधनात्। एवं "झेर्जुस्" इत्यत्र जकारोच्चारणसामर्थ्यात् "क्ङिति च" इति गुणनिषेधाभावकल्पनात् अजुहवुरित्यादौ न दोषः। **इतिचेदत्रोच्यते**–भूधातोर्यङ्लुकि अबोभवुरित्यत्र "श्तिपा शपाऽनुबन्धेन निर्दिष्टं यद् गणेन च। यत्रैकाज्ग्रहणञ्चेति पञ्चैतानि न यङ्लुकि॥" इति निषेधात् "जिति च" इति गुणानापत्तेः।

**मान्यास्तु** "गुणो यङ्लुकोः" इति लुग्ग्रहणेनानित्यत्वाद् भाष्येऽनुक्तेश्चाप्रामाणिकत्वात् "श्तिपा शपा" इति निषेधाभावान्नोक्तदोषः। तथापि ज्ञानगौरवादयन्न्यासो नादरणीय इति प्रवदन्ति।

## शेषो घ्यसखीति—

ननु "शेषोध्यसखि" इति "पतिस्समास एव" इति च सूत्रद्वयम्परित्यज्य अनदीसंज्ञौ याविदुतौ तदन्तं सखिपतिवर्जं घिसंज्ञंभवतीत्यर्थकः "शेषोध्यसखिपती" इत्येव न्यास आस्ताम्। तथैव सुसख्यादिशब्दे संज्ञासिद्धेः सख्यादिशब्दे-तदभावस्य च सिद्धेः। नच तथासति गवाम् पत्या इत्यादौ गवाम्पतीतिसमुदायस्य पतिरूपत्वाभावेन घित्वापत्तिरति वाच्यम् ? "असखिपती"इत्यस्य पर्युदासन्यायेन सखिपतिभिन्नस्य सखिपतिसदृशस्य प्रातिपदिकस्यैव ग्रहणेन वाक्यस्य तत्त्वाभावसम्पादनात्।

**परे तु** तत्र वाक्ये घिसंज्ञायां सत्यामपि न घित्वप्रयुक्तकार्याणामापत्तिः ? घित्वप्रयुक्तकार्यविधायके "घेर्ङिति" इत्यादौ प्रत्यासत्तिन्यायेन घिसंज्ञकत्र्त्यङ्गसंज्ञानिमित्तकविधौ तद्विधानात् प्रकृते तदप्राप्तेरिति वदन्ति। **अत्रोच्यते**—यथा राद्धान्ते बहुच्पूर्वकसखिशब्देन बहुसखिना इति रूपम्भवति न तथा बहुच्पूर्वकपतिशब्देन बहुपतिना इति तत्र "पतिः समास एव" इति नियमात् किन्तु बहुपत्येति। अधुना तादृशस्य बहुपतिनेत्यस्य आपत्तेः समुदायस्य पतिरूपत्वाभावात्।

नच तथा दोषापत्तिपरिजिहीर्षया "सखिपती समास एव" इति न्यासोऽस्तु इति न बहुपतिनेत्यादीनामापत्तिरिति वाच्यम् ? तथा आपत्तिवारणेऽपि अनुपपत्तेर्दुर्वारत्वाद् बहुच्पूर्वकसखिशब्दादिष्टस्यापि बहुसखिनेत्यस्यासिद्ध्यापत्तेः समासत्वाभावादिति मनोरमाकाराः।

**शेखरकारास्तु**–सख्यवयवभिन्नौ यौ ह्रस्वेकारोकारौ तदन्तं नदीसंज्ञकवर्जं

घिसंज्ञमिति सूत्रार्थः "शेषो घ्यसखिपति" इत्यस्य । एवञ्च यथा बहुपतिना इति न भवति किन्तु बहुपत्येति तथैव बहुसखिना इत्यपि न, किन्तु बहुसख्येत्येव ? सख्यवयवभिन्नेकारासत्त्वात् ।

एवञ्च नात्र दोषः किन्तु तथान्यासे सुसख्येतिवद् भूपत्या इत्यनिष्टापत्तेः । "पतिसखी"इत्यादि द्वितीये तु भूपतिनेतिवत् सुसखिनेत्यस्यापत्तेः । एव बहुपत्येत्यस्यासिद्ध्यापत्तेः "पतिर्वृत्तावेव" इत्यपि न न्यासः । न च पूर्वसूत्रेण सिद्धौ "पतिः समास" इति नियमार्थम् । पतिशब्दः समास एव घिसंज्ञ इति । एवञ्चैवकारग्रहणमत्र व्यर्थमिति चेन्न ? एवकारस्य विपरीतनियमवारणाय प्रयोजनत्वात् । अन्यथा समासे घिसंज्ञा चेत् पतिशब्दस्यैवेति विपरीतनियमस्यापि प्रमाणाभावेन कल्पनीयतया महाकविनेत्यायसिद्ध्यापत्तेः । असम्बुद्धौ इत्यादिनिर्देशेन विपरीतनियमवारणस्य शक्यत्वेऽपि ज्ञानगौरवात् ।

## घेर्ङितीति—

नन्वत्र सूत्रे "सुपिच" इत्यतोऽनुवर्त्तमानं सुपीति विशेष्यीकृत्य "यस्मिन्विधिः" इति तदादिविधौ घिसंज्ञकस्य ङकारादौ सुपि गुणः इत्यर्थकेन "घेर्ङि" इति न्यास एव लघुभूत आस्ताम् । नच प्रवाहुशब्दात् तृतीयैकवचनटाविभक्तेः "आङ्याजयाराणामुपसंख्यानम्" इति वार्त्तिकेन आङादेशे ङित्वात् "घेर्ङिति" इति राद्धान्ते गुणे प्रवाहवेति सिद्ध्यति । अधुना ङादिसुपोऽभावात् तत्राव्याप्तिरिति वाच्यम् ? तेन आङादेशापेक्षया ङादेशस्यैव विधानेनादोषात् । न च तथान्यासे "आण्नद्याः" इत्यत्रापि ङीत्यास्यैवानुवृत्त्या नद्यन्तात् परेषां ङादीनामाडागम इत्यर्थे मत्यै इत्यादौ ङेः ङादित्वेन भूतपूर्वगत्या सिद्धावपि मत्यामित्यादौ "ङेराम्" इत्यामि तस्य ङादित्वाभावेन आडभावापत्तिः । नच स्थानिवत्त्वेन आमि ङादित्वं लभ्यम् ? ङादित्वस्य अल्वृत्तिधर्मघटितत्वेन विशेषणेनालाश्रयणे ऽनल्विधाविति तन्निषेधात् । राद्धान्ते तु आड्विधायके "घेर्ङिति" इत्यतः ङितीत्यनुवर्त्त्यं सप्तम्याश्च षष्ठीत्वं कल्पयित्वा नद्यन्तान्ङितामाडागम इत्यर्थेन मत्यामित्यत्र ङेरामि कृते "आण्नद्याः" इत्याटि "ह्रस्वनद्यापः" इति नुटि च प्राप्ते परत्वादाटा नुड्बाधे आटि कर्त्तव्ये "नल्यपि" इतिज्ञापितेन 'अनुबन्धकार्ये ऽनल्विधाविति न प्रवर्त्तते' इति प्रवृत्त्या ङितः इत्त्वधर्मघटितत्वान् निषेधाप्रवृत्त्या स्थानिवत्त्वेनाट् सिद्ध्यति इति वाच्यम् ? तथापि "ङेराम्नद्यामि" त्यत्र "ङेर्ङाम् नद्याम्" इत्यादिपाठेन

ङादित्वस्य सुतरां साधनात् । इति चेन्न? "ङेर्झाम्" इति न्यासे "वार्णादाङ्गं बलीय" इति परिभाषया ङकारेत्संज्ञाम्प्रबाध्य आटि प्रत्ययादित्वाभावेन "लशक्व-तद्धित" इत्यस्याप्रवृत्त्या ङामो ङकारलोपानापत्तेः ।

**अपरे तु** "ह्रस्वात्तादौ तद्धित" इत्यत्र "एकहलादौ पूरयितव्ये" इत्यादौ "तादौ" इत्यपेक्षया "ति" इति "हलादौ" इत्यस्य स्थाने "हलि" इति च पठित्वा "यस्मिन् विधिः" इति परिभाषया तादौ हलादौ इत्याद्यर्थसिद्धेः तथाऽ-करणरूपपाणिनितात्पर्येण परिभाषायाः तदादिविधित्वसम्पादिकाया असत्त्वमनित्यत्वं वा कल्प्यत इति तस्याः प्रकृते ' घेर्ङिति" इत्यत्राप्रवृत्त्या "येन विधिः" इति तदन्तत्वे ङान्ते सुपीत्यर्थापत्तौ सूत्रोदाहरणानामेवोच्छेदापत्तेर्नायन्न्यासः कार्य इति ब्रुवते । सुपोऽवयवे ङकारे इत्यर्थेऽदोष इति मतन्तु न समादरणीयम् ? क्लिष्टकल्पनत्वात् ।

**केचित्तु** "घेः" इत्येव न्यासः "जसि च" इत्यनेन घिसंज्ञकस्याङिति गुणश्चे-त्तर्हि जस्येवेति नियम्य हरिभिरित्यादौ दोषाभावात् । अथवा अनुनासिकान्तभिन्न-गुणाद्येकवचनसुबितरसुपि चेद् घेः सुपि गुणस्तर्हि जस्येवेति नियमाद् दोषविरहात् ङेप्रभृतिषु ङकारोच्चारणस्यापि परित्यागे विशेषलाघवसम्भवात् इति चेन्न ? पतयः इत्यादौ "जसि च" इत्यस्य चरितार्थतया नियामकत्वासम्भवात् ।

अत्र कौमुदीमूलं सुपि किम्पट्वी इति प्रतीकीकृत्य **केचित्**—ननु "घेर्ङिति" इति सूत्रे सुपि इत्यस्यासम्बन्धेऽपि पट्वी इत्यत्र न गुणापत्ति? टापः प्रागेव"तद्धिताः" इत्यस्य पाठोऽस्तु "यस्येति च"इति सूत्रे इतीति "औङः श्यामप्रतिषेधः"इति "प्राचांष्फस्तद्धितः" इत्यत्र तद्धित इति च न कर्त्तव्यम्भवतीति विशिष्टलाघव-सम्भवेऽपि टापःप्राक् पाणिनिना "तद्धिताः इत्यधिकाराकरणेन स्त्रीप्रत्यये गुणो न भवतीति कल्पनात् "वोतोगुणवचनात्" ङीषि पट्वीत्यत्र गुणाभावसाधनात् इति । तन्न सम्यक् ? तद्धिताधिकारस्य टापः प्राक्पाठे "अतद्धिते" इति पर्युदासात् ङीप्ङीषादौ ङकारादेरित्त्वनिषेधात् "लशक्वतद्धिते" इत्यस्याप्राप्तेः । नच ' चुटू" इत्यत्र चुटुङः" इति न्यासेन तथात्वेऽप्यदोष इति वाच्यम् ? दण्डिनी इत्यादौ "नस्तद्धिते" इति लोपापत्तेः । "प्राचां ष्फ" इत्यत्र तद्धितग्रहणफलस्य कौमुदी-मूल एव स्पष्टत्वात् ।

नच "ङाबुभाभ्याम्" इत्यादौ ङापो ङित्करणसामर्थ्यात् स्त्रीप्रत्ययेषु "नस्तद्धित" इत्यस्याप्रवृत्तिकल्पनेन दण्डिनी इत्यादौ दोषाभावात् फङं विधाय ङित्करणसाम-

र्थ्यात् क्वचिदन्यतो विधानार्थमित्येव आसुरायणीत्यादिसिद्धौ "प्राचां ष्फस्तद्धित" इत्यत्र तद्धितग्रहणस्य वैयर्थ्यसम्भवोऽपीतिवाच्यम् ? गोकक्षशब्दाद् "गर्गादिभ्यः" इति यञि "क्रौड्यादिभ्यश्च" इति ष्यङि "षाद्यञश्चाब्वाच्यः" इति चापि "प्राचां-ष्फ" इति ष्फप्रत्ययचिकीर्षायां "भस्याढे तद्धिते" इति पुंवद्भावे गौकक्ष्यशब्दाद् यञि गौकक्ष्यायणी इति भवति, तद्धितग्रहणाभावे तु "भस्याढे" इत्यस्याप्रवृत्त्या पुंवद्भावाभावेन ष्फप्रत्ययाभावापत्तेः। नच तत्र तद्धितग्रहणाभावेऽपि तद्धिताधि-कारादेव ष्फप्रत्ययस्य तद्धितत्वसिद्ध्या "भस्याढ" इत्यस्य प्रवृत्तिस्सुलभा, सर्वत्र-ग्रहणमपकृष्य चापो बाधाद् वा न दोष इति वाच्यम् ? तथापि कुरुशब्दात् "ऊङुतः" इत्यूङि कुरु ऊ इति स्थिते "ओर्गुणः" इति गुणापत्तेः। नच ह्रस्वे एव विधातव्ये ऊङिति दीर्घोकारविशिष्टविधानसामर्थ्याद् गुणो न भवतीति कल्पनया निर्वाह इति वाच्यम् ? दीर्घविधानस्य उत्तरार्थम् श्वश्रूरित्याद्यर्थमावश्यकतया ज्ञापकत्वासम्भवात्। एवञ्च कुरूरित्यत्र दोषतादवस्थ्येन "घेर्ङिति" इत्यत्र सुब्ग्रहण-स्यावश्यकत्वात्।

**विशिष्टलाघवाग्रहिणस्तु**-"डाबुभाभ्याम्"इति डित्त्वसामर्थ्येन "स्त्रियाम्" इत्यधिकृतेषु तद्धितसंज्ञाप्रयुक्तं कार्यं क्वचिदेवेति ज्ञापनेन, तद्धिताधिकारस्य टापः प्रागकरणेन स्त्रीप्रत्यये गुणो नेति कल्पनेन च दोषविरहात् सुपीत्यस्य सम्बन्धो नैवास्तु। रमेत्यादौ अनुदात्तनिवृत्तिस्वरेण सिद्धिसम्भवात्। अन्येतु "वोतो गुण-वचनात्" इति सूत्रे "अन्यतोङीष्" इत्यत एव ङीषित्यनुवर्त्तते तत्र तु ङीषपेक्षया टीष् इति न्यासेन तस्यैव चेहानुवृत्त्या पट्वीत्यत्र गुणविधायकस्याप्रवृत्त्याऽदोषात् सुपीत्यस्य सम्बन्धो मास्तु। पट्वी इवाचरति पट्वयते इत्यत्रा "नुदात्तङित" इत्यात्मनेपदार्थं ङीषो ङित्करणमावश्यकमिति तु न ? प्रातिपदिकानुबन्धप्रयुक्तम् पदव्यवस्थानञ्च भवतीति "ब्राह्मणमाणव" इति सूत्रभाष्यादेव समुपलब्धेः। नच रुधातोः "तिप्तस्" इति लटस्तसि रुत इत्यत्र गुणापत्तिः ? इक्परिभाषोपस्थित्या "क्ङिति च" इति निषेधसम्भवात्। अङ्गाधिकारीयत्वेन प्रत्ययस्यैव ङितो ग्रहणा-च्च न मध्वानयेत्यादौ आङो ङित्वसत्त्वेन गुणापत्तिः।

## ङसिङसोश्चेति—

ननु एङो ङितोऽति परे पूर्वरूपमित्यर्थक "ङितः" इतिन्यासेनैव सिद्धौ किं गुरुभूतन्यासेनेति चेन्न ? अस्मादेव सूत्रात "ऋत उत्" इत्यत्रापि ङित एवानुवृत्ति-

प्रसङ्गाद् जाग्रतीत्यादौ गुणापत्तेः। नचाति ङित्त्वाभावः? "सार्वधातुकमपित्" इत्यनेन झेर्ङित्त्वादति तदादेशङित्त्वानपायात्। नच "लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैव ग्रहणम्" इति परिभाषया प्रतिपदोक्तस्यैव ङितो ग्रहणेन प्रकृते ङितो झेः स्थाने जातोऽतिरपि ङित् इत्यातिदेशिकत्वेन लाक्षणिकतयाऽग्रहणाददोष इति वाच्यम्? तत्तच्छब्दानुवादेनोच्चरितत्वं साक्षादुच्चरितत्वं वा प्रतिपदोक्तत्वमिति प्रकारेण कुत्रापि प्रतिपदोक्तालाभात्।

## अच्च घेरिति—

ननु अत्र लाघवात् घेः परस्य ङेर्डौवादेश इत्यर्थकः "घेर्डौ इति सन्न्यास एवास्तां तावतैव सर्वेष्टसिद्धेरिति। नच तथान्यासे विंशतिशब्दात्सप्तम्येकवचने इष्टमपि राद्धान्ते विंशताविति, इदानीं ङेर्डौ आदेशे "तिविंशतेर्डिति इत्यनेन विंशतेर्भस्य तिशब्दस्य लोपस्स्यात् डिति इत्यर्थकेन तिशब्दस्य लोपे वृद्धौ विंशौ इत्यापतेदिति वाच्यम्? तथासति "अच्चघेः" इति सूत्रेऽद्ग्रहणप्रत्याख्यानं डित्वमाश्रित्य निरुक्तप्रकारेण भाष्यकृता कृतमसङ्गतं स्यादिति तादृशभाष्यसङ्गतये विंशतिशब्दस्य डौ रूपानभिधानकल्पनात्।

**केचित्तु** "घेर्डौ" इति न्यासे हरिशब्दादाचक्षाणण्यन्तात् क्विपि टिलोपणिलोपयोर्डौ सिद्धान्ते रेफस्याकारादेशे ङेरौकारादेशे च वृद्धौ हौ इति, अधुना डौ इत्यादेशे प्रथमटिलोपस्य स्थानिवत्त्वेन द्वितीयटिलोपाभावे हरौ इति फलभेद इति वदन्ति। तन्न? रेफान्तस्य हर् इत्यस्य घित्वाभावेन पक्षद्वयेऽप्यादेशाप्रवृत्त्या हरि इत्यस्यैव रूपस्येष्टत्वात्।

**अपरे तु** "टेर्डिति"तिविंशतेस्तद्धिते, न" इति न्यासेन विंशतौ इत्यत्रादोषान्न्यासस्सुवच एव। अत एव औकारं डितमाश्रित्य अदिति भाष्ये प्रत्याख्यातम्। अन्यथा विंशतावित्यत्र फलभेदात् तदसङ्गतिः स्पष्टैवेति भणन्ति।

## अनङ् सौ इति—

ननु अत्र लाघवात् सखिशब्दात् परस्य सोर्डादेशो भवतीत्यर्थकः "सोर्डा" इत्येवास्तु न्यासस्तथैव सखिशब्दात् सोर्डादेशे डित्त्वसामर्थ्यादभस्यापि टेर्लोपे सखेत्यस्य सिद्धेः। नचैवं सोर्डाविधाने प्रकृते सिद्धावपि "ऋदुशनस्" इति सूत्रे धारावाहिकन्यायेन तदनुवृत्तौ ऋदन्तेभ्य उशनसादिभ्यश्च परस्य सम्बुद्धिभिन्नस्य सोर्डादेश इत्यर्थापत्तौ उशनस्शब्दात् सोर्डाविधाने टिलोपे नान्तत्वे "सर्वनाम-

स्थाने चासम्बुद्धौ" इति दीर्घापत्तिः पुरुदंसशब्दे टिलोपे सान्तसंयोगसत्त्वेन "सान्तमहतस्संयोगस्य" इति दीर्घापत्तिश्चेति वाच्यम् ? 'असंवृत्ते पुनर्वृत्तावविधिः'इति परिभाषया संज्ञापूर्वकविधेरनित्यत्वाद् वा दीर्घाप्रवृत्तेः । **इतिचेदत्रोच्यते**–सखिशब्दादाचारक्विबन्तात् कर्तृक्विपि तुकि तत्र डादेशे सखा इति राद्धान्ते च अनङि सख्या इति फलभेदसत्वात्तादृशन्यासस्य दुष्टत्वात्। नच "गौणमुख्ययोर्मुख्ये कार्ये प्रत्ययः" इति परिभाषया एतादृशसखिशब्दे प्रवृत्तिरेवानिष्टेति क्व दोष इति वाच्यम् ? डादेशस्य विभक्तिनिमित्तकत्वरूपपदकार्यत्वाक्षतेर्न्यायविषयाभावात् ।

**शुक्लास्तु**–टीकाग्रन्थोक्तरीत्या "नामि" इत्यत्रामीतिन्यासम्प्रक्रम्य "षट्चतुर्भ्यश्च" इति सूत्रे त्रेः इत्यनुवर्त्य तिसृणामित्यत्र नुट्साधकभाष्येण इकारान्तेभ्य आचारक्विबन्तप्रकृतिककर्तृक्विपोऽनभिधानेन त्रितामित्यत्र फलभेदवारणाय स्वीकृतेन ईदृशसखिवच्छब्दस्याप्यनभिधानेन "सोर्डो" इत्यत्र दोषाभावेन अत्रानङ्ग्रहणं क्वचिदन्यतोऽपि विधानार्थं तेन उशनसस्सम्बुद्धावनङ् सिद्ध इति प्राचीनाः ।

अधिकन्तत्त्वमस्माकं तातचरणैः पण्डितराजैर्विनिर्मितायां कौमुदीकल्पलतिकायां सिद्धान्तकौमुदीगुप्तरहस्यप्रकाशिकायां पश्यन्तु भवन्तः ।

## अलोऽन्त्यात् पूर्व उपधेति—

ननु उत्तमोऽन्त्यस्तत्समीपवर्त्ती उपोत्तम इत्यर्थात् उपोत्तमोऽलुपधासंज्ञकः भवतीत्यर्थकः "अलुपोत्तम उपधा" इत्येवास्तु न्यासः किमिति गुरुभूतसूत्रेणेति । नच तथा सति अन्त्यत्वं वर्णत्वव्याप्यमितिनिश्चयाभावेन दम्भधातुघटक"म्भ" इत्यस्यान्त्यत्वेन तत्समीपस्थस्याकारस्योपधात्वेन "पोरदुपधात्" इत्यनेन पवर्गान्तादडुपधाद् यत्स्यादित्यर्थकेन यदापत्तिः, राद्धान्ते तु अलो वर्णस्यैवोच्चारणात् अवध्यवधिमतोस्साजात्याश्रयणात् पूर्वस्यापि वर्णस्यैव सम्भवाददोष इति वाच्यम् ? तथापि "अत उपाधायाः" इति सूत्रे उपधाग्रहणसामर्थ्येन प्रकृतन्यासेऽपि अन्त्यपदेन वर्णस्यैव ग्रहणेन दोषविरहात् ।

अन्त्यत्वञ्च स्वघटकत्व–स्वघटकोत्तरत्व–स्वघटकपूर्वत्वाभाववत्त्वसम्बन्धैस्स्वविशिष्टत्वरूपमिति नव्यशाब्दिकाः ।

## हल्ङ्याब्भ्यो दीर्घादिति—

ननु अत्र ईकाराकाररूपौ यौ ङ्यापौ तदन्तात् परस्य सोर्लोप इत्यर्थकः

'ङ्यापस्सोः" इत्येव न्यासोऽस्तु हलन्तात् परेषां स्वादीनां "संयोगान्तस्य" इति लोपेनैव सिद्धेः। भाष्ये च अतिखट्वः निष्कौशाम्बिः इत्यत्र लोपवारणाय दीर्घग्रहणम्प्रत्याचक्षाणेन भाष्यकारेण ङी ई आ आबिति प्रश्लेषदर्शनम्। नच तथा सति सरवेत्यत्रोपस्थिते दोषमदत्त्वा प्रथमहल् किं राजेति हलन्ते दोषदानं कथङ्कारमिति वाच्यम्? तत्र "सोर्डौ" इति न्यासस्य सुवचत्वोक्त्या संयोगान्तलोपानावश्यकतया "प्रथमहल् किं राजा न लोपो न स्यात् संयोगान्तलोपस्यासिद्धत्वात्" इति ग्रन्थानुधावनात्। विशेषश्च कौमुदीकल्पलतिकायाम् मत्तातचरणविनिर्मितायाम्।

नचैवं राजेत्यत्र संयोगान्तलोपस्यासिद्धत्वाद् नलोपो न स्यादिति न्यासे दोष इति वाच्यम्? तथोक्तरीत्या "नङिसम्बुद्ध्योः" इत्यत्र सम्बुद्धिग्रहणवैयर्थ्येन 'संयोगान्तलोपस्सिद्धो नलोपविषये' इति ज्ञापनेनादोषात्। नच हे ब्रह्मन् इत्यत्र "स्वमोर्नपुंसकात्" इति सोर्लुकि नलोपवारकतया सम्बुद्धिग्रहणस्य चारितार्थ्याज् ज्ञापकत्वासम्भव इति वाच्यम्? तत्र हेब्रह्मन् हे ब्रह्मेति रूपद्वयसिद्धये "सम्बुद्धौ वा नपुंसकानान्नलोपो वाच्यः" इति वार्त्तिकस्यारम्भादेव सम्बुद्धिग्रहणवैयर्थ्यस्य स्पष्टत्वात्। नच भाष्ये "वा नपुंसकानाम्" इत्येतन्मात्रस्यैव सत्त्वेन तत्रानुवृत्तये परमावश्यकं सम्बुद्धिग्रहणं न पुनर्ज्ञापकतामर्हति इति वाच्यम्? "इह किञ्चित् त्रपो इति" इति भाष्यस्थन्यायेन वार्त्तिके एव सम्बुद्धिग्रहणे विधातव्ये इह तदुपादानस्य वैयर्थ्याज् ज्ञापकत्वोक्तेः।

नच "संयोगान्तलोपस्सिद्धो नलोपे" इति सामान्यतो ज्ञापने गोमानित्यादावपि नलोपापत्तिः? ज्ञापकस्य विशेषापेक्षतया यत्र नकारविभक्त्योरानन्तर्यं तत्रैव ज्ञापितांशप्रवृत्तेः। गोमानित्यादौ च गोमान्त् सु इत्यत्र स्थितौ तकारविभक्त्योरानन्तर्यसत्त्वेन तत्र ज्ञाप्यांशाप्रवृत्त्या नलोपासिद्धत्वे बाधकाभावादिष्टसिद्धेः। नच अभिनद् स् अत्रेति वाक्यसंस्कारकाले संयोगान्तलोपे "दश्च" इति रुत्वे तस्य "अतो रोः" इत्युत्वे कर्त्तव्ये संयोगान्तलोपस्यासिद्धत्वेनोत्वानापत्तिरिति वाच्यम्? 'हरिवो मेदिनन्त्वा' इत्यत्र वैदिके हरिशब्दान्मतुपि सम्बुद्धौ मतुपो मकारस्य "छन्दसीरः" इत्यनेन इवर्णान्ताद् रेफान्ताच्च परस्य मतोर्मस्य वस्स्याच्छन्दसि इत्यर्थकेन वत्वे नुमि संयोगान्तलोपे "मतुवसोरु संबुद्धौच्छन्दसि" इत्यनेन मतवन्तस्य वस्वन्तस्य च रुःस्यात्संबुद्धौ इत्यर्थकेन अलोऽन्त्यपरिभाषया नकारस्य रुत्वे "हशि च" इत्युत्वे कर्त्तव्ये संयोगान्तलोपस्यासिद्धत्वाभावाय "संयोगान्तलोपोरो-

रुत्वे सिद्धो वाच्यः" इति वार्त्तिकस्यावश्यकर्त्तव्यतया तेनैव अभिनोऽत्र इत्यादौ अपि संयोगान्तलोपस्य सिद्धत्वबोधनेन क्षतिवैकल्यात ।

नचोत्वे संयोगान्तलोपस्य अभिनोऽत्रेत्यत्र सिद्धत्वस्य बोधनेऽपि "एङः पदान्तादति" इति पूर्वरूपम्प्रति संयोगान्तलोपस्यासिद्धत्वन्निश्चयेन समापततीति वाच्यम्? तत्र सिद्धत्वबोधकवार्त्तिके उत्वे इत्यस्यावृत्त्या एकत्र सत्सप्तमीं अपरत्र च निमित्तसप्तमीं स्वीकृत्य उत्वे कर्त्तव्ये कृते च संयोगान्तलोपस्सिद्ध इत्यर्थाश्रयेणादोषात् ।

**अपरे तु** तत्र संयोगान्तलोपस्सिद्धस्सन्धौ, संहितायां वा इत्यादिनिवेशयन्तो दोषमेनं वारयन्ति । नचैवमपि डुभृञ् धारणपोषणयोरित्यस्मात् लङि तिपि द्वित्वादिषु अबिभर्भवानित्यत्र "रात्सस्य" इति नियमात् तकारस्य संयोगान्तलोपानापत्तिः, राद्धान्ते तु "हल्ङ्याब्" शास्त्रेण तिलोप इति दोषाभाव इति प्रकृतसूत्रे प्रथमहल्ग्रहणं तिस्योर्ग्रहणञ्च कार्यमेवेति वाच्यम्? तथासति "रात्सस्य" इत्यत्र लोपेन तकारस्यापि प्रश्लेषमङ्गीकृत्य आपत्तिवारणात् । नचैवमपि कीर्त्तधातोर्ण्यन्तात् क्विपि णिक्किलोपयोः सौ कीर्त्त इत्यत्र तकारस्य संयोगान्तलोपापत्तिरिति, णिलोपादेः स्थानिवत्त्वन्तु न शंक्यम्? पूर्वत्रासिद्धीये न स्थानिवदिति क्वौ लुप्तं नेतिवा निषेधादिति वाच्यम्? "यथालक्षणमप्रयुक्ते" इति भाष्यबलेन तत्र तकारलोपस्यैवेष्टत्वात् तादृशान्तादृशभाष्येणानभिधानकल्पनाद् वा इष्टापत्तेः । प्रश्लेषपक्षेऽपि अर्थवतस्तकारस्य ग्रहणात् सकारसाहचर्येण प्रकृत्यनवयवतकारस्य वा "रात्सस्य" इत्यत्र ग्रहणाददोषात् । न च उखास्रस् इति स्थितौ "वसुस्रंसुध्वंसु" इति दत्वस्यासिद्धत्वेन "स्कोसँय्योगाद्योः" इति संयोगादिलोपे सुसकारस्य रुत्वबिसर्गयोरुखास्र इत्यनिष्टं स्यात् इष्यते च उखास्रदिति वाच्यम्? "वस्वादिषु दत्वं सिद्धं वाच्यम्" इति दत्वस्य सिद्धत्वबोधनेन पूर्वं दत्वे पश्चात् संयोगादिलोपाप्रवृत्त्या संयोगान्तलोपेनेष्टसिद्धेः । नच सौलोपात्प्राक् पदान्तत्वाभावेन कथन्दत्वविधायकप्रवृत्तिरिति वाच्यम्? सावपि "स्वादिषु" इति योगविभागेन भाष्ये पदत्वस्येष्टत्वात् । नच सौ पदत्वाश्रयणे राजेत्यादौ पूर्वं"नलोपः प्रातिपदिक"इति नलोपे संयोगान्तलोपस्याभावापत्तिः? पथिन्शब्दात् सौ"इतोऽत्सर्वे" इत्यत्वे नान्तलक्षणे "सर्वनामस्थाने चासम्बुद्धौ" इति दीर्घे ततो नलोपे संयोगान्तलोपाप्राप्त्या सोस्सकारस्य रुत्वबिसर्गादौ पन्था इत्यस्य सिद्धेः तदर्थम् "पथिमथि" इत्यारब्धस्या-

त्वविधायकस्य वैयर्थ्याज् ज्ञापकात् "नलोपात्प्राक्संयोगान्तलोपः" इति सिद्धान्तादिष्टसिद्धेः ।

नच सम्बुद्धौ हे पन्था इत्यत्र "सर्वनामस्थाने चासम्बुद्धौ" इत्यस्याप्राप्त्या तत्राकारश्रुतये "पथिमथि" इत्यात्वविधानन्न ज्ञापकमिति वाच्यम् ? तथासति "नङिसम्बुद्धयोः" इति सूत्रीयसम्बुद्धिग्रहणेनैव तदर्थज्ञापनात् । तथाहि "नङिसम्बुद्धयोः" इत्यत्र ङिसम्बुद्धयोः इतिषष्ठयन्तम्, तथाच ङ्यन्तस्य सम्बुद्धयन्तस्य च प्रातिपदिकस्य नलोपो न इत्यर्थे हे राजन्नित्यादौ यदि पूर्वं नलोपः स्यात्तदा सम्बुद्धयन्तप्रातिपदिकस्यासम्भवात् सम्बुद्धिग्रहणं व्यर्थं स्यात् तेन व्यर्थीभूतेन संयोगान्तलोपात् प्राक् नलोपो न भवतीति ज्ञापनसौलभ्यात् । अतएव परमे व्योमन्नित्याद्यर्थं षष्ठयन्तत्वपक्षस्सर्वसम्मतसिद्धः । अत्र सम्बुद्धिग्रहणेन विभक्तिसंयोगान्तलोपस्य नासिद्धत्वमितिज्ञापनेन "संयोगान्तलोपो नासिद्धस्सन्धौ" इत्यादिकथितप्रकारेण वा राजैधते इत्यादौ न दोषः । नचैवमपि विद्वानित्यत्र "सान्तमहतः" इति दीर्घान्नित्यत्वात् परत्वाच्च दत्वे तस्यैव संयोगान्तलोपे कृते विद्वन्नित्यापतेत, दीर्घविधिस्तु विद्वांसौ इत्यत्र चरितार्थः, किञ्च पिपठीरित्यत्र संयोगादिलोपे कृते रुत्वे विसर्गे च "र्वोरुपधाया" इति दीर्घो न स्यात्, एवं शक् धातोः यङ्लुगन्तात् लङि तिपि अशाशक् इत्यत्र संयोगादिलोपप्रसङ्ग इति वाच्यम् ? संयोगान्तलोपात्प्राक् संयोगादिलोपे अचकात् इत्यादौ संयोगान्तलोपात् पूर्वं संयोगादिलोपे दत्वविधायक "तिप्यनस्तेः" इति सूत्रारम्भवैयर्थ्येन तत्सामर्थ्यात् "संयोगादिलोपात् प्राग् विभक्तिसंयोगान्तलोपो भवति', इति ज्ञापनेनादोषात् । तत्रापि ज्ञापनस्य धात्ववयवसंयोगादिलोपात् पूर्वं विभक्तिसंयोगान्तलोप इति विशेषापेक्षत्वस्वीकारेण न भूयादित्यादौ संयोगादिलोपात् प्राग्विभक्तिसंयोगान्तलोपे तकाराश्रुतिरिति । नच तथापि अविभा राज्यम् इत्यत्र संयोगान्तलोपस्यासिद्धत्वात् "ढ्रलोपे" इति दीर्घो न स्यादिति वाच्यम् ? अजर्घाः लीढ इति भाष्येण, "ढ्रलोप" इति दीर्घे कार्ये ढत्वरुत्वयोरसिद्धत्वात् दीर्घाप्राप्तौ तथोदाहरणपरभाष्यप्रामाण्येन च "पूर्वत्रासिद्धम्" इतिसूत्रीयपूर्वपदेनढ्रलोपसूत्रस्याग्रहणेन दोषविरहात्। अत एव चतूराजते इत्यत्र सुचः संयोगान्तलोपस्य सिद्धत्वेन दीर्घः सिध्यतीति ।

नच तथापि "ङ्यापस्सोः" इति न्यासे सुरां सुनोतीति सुरासुत् तमाचष्टे सुरासयतीति सुराः इत्यत्र सुमः सकारस्य लोपापत्तिः, राद्धान्ते तु परस्परसाहचर्यान्न

दोष इति वाच्यम् ? अधुनाऽपि ङ्याप्साहचर्येण प्रत्ययरूपस्यैव ग्रहणेनादोषात् ।

## अचो ञ्णितिइति—

ननु "अत उपधाया ञ्णिति" इति पाठेन ञित्णित्प्रत्ययेषु वृद्धिसिध्या पृथक् "अचो ञ्णिति" इति सूत्रं किमर्थम् । नच तथा सति "गोतो णित्" इत्यादिसूत्रेण णित्वं व्यर्थं स्यादिति वाच्यम् ? तत्रापि सर्वनामस्थाने ओकारस्य वृद्धिरित्यर्थक "ओतो वृद्धिः" इति न्यासेन "गोतो णित्" इतिसूत्रपरित्यागेनापि निर्वाहात् । एवञ्च "सख्युरसम्बुद्धौ" इत्यत्र वृद्धिपदमनुवर्त्य सम्बुद्धिभिन्नसर्वनामस्थाने सख्युरङ्गस्य वृद्धिरिति तदर्थेऽलोऽन्त्यपरिभाषया निर्वाहसम्भवात् । अत एव "ओतो वृद्धिः" इतिसूत्रात् "णलुत्तमो वा" इत्यत्रापि वृद्धिपदेऽनुवर्त्तमाने न दोष इति । नच कुम्भकार इत्यादौ वृद्धिसिद्धये "अचो ञ्णिति" इति सूत्रस्य सत्त्वमिति वाच्यम् ? तत्रापि "सार्वधातुकार्धधातुकयाः" इत्यनेन गुणे पश्चात् "अत उपधायाः" इति वृद्धौ रूपसिद्धेः । नच "जाग्रोऽविचिण्णल्ङित्सु" इत्यत्र जागर्त्तेर्गुणस्स्यात् विचिण्णल्ङिद्भ्योऽन्यत्र वृद्धिविषये प्रतिषेधविषये च इत्यर्थके सूत्रे जजागार इत्यादौ णलि गुणनिषेधार्थमेव निषेधकोटौ णल्ग्रहणमिति राद्धान्तः । यदि गुणोत्तरमपि वृद्धिः स्वीक्रियते तदा तु जातेऽपि गुणे "अत उपधायाः" इति वृद्धया रूपसिद्धौ बाधकविरहात् । तादृशेन णलि गुणनिषेधार्थं कृतेन पर्युदासेन गुणोत्तरा वृद्धिर्न भवतीति ज्ञापनेन कुम्भकारादौ तद्रीतेरनादराद् वृद्धये "अचोञ्णिति" इति सूत्रमावश्यकमिति वाच्यम् ? ज्ञापकस्य विशेषापेक्षत्वेन जागृधातुमात्रविषयकत्वादन्यत्र तज्ज्ञाप्यांशाप्रवृत्तेः पूर्वोक्तदिशा कुम्भकारादिसिद्धेर्निर्वाधत्वात् । नच "अत उपधायाः" इत्यस्य अदुपधाद्विहिते ञिति णिति च वृद्धिरित्यर्थस्य रजयतीत्यादौ वृद्धिवारणायावश्यं स्वीकार्यत्वेन कुम्भकारे कथं वृद्धिः । नच तथाऽर्थस्वीकारे राग इत्यत्र तद्धातोर्घञ्यपि वृद्धिर्नस्यादिति वाच्यम् ? "घञि च भावकरणयोः" इतिसूत्रे घञि इत्यत्र विषयसप्तमीस्वीकृत्या पूर्वं नलोपे पश्चाद् घञि अदुपधाद्विहितञितो घञस्सत्त्वेन वृद्धिसिद्धेरिति वाच्यम् ? रजयतीत्यादौ जातायामपि वृद्धौ "मितां ह्रस्वः" इति ह्रस्वे रूपसिद्धावविशेषात् तदर्थम् "अत उपधायाः" इत्यस्य तादृशार्थकरणप्रयोजनाभावात् गुणोत्तरं वृद्धया कुम्भकारादिसिद्धेर्निर्वाधत्वात् । नच रजयतीत्यत्र यदि मित्वं स्यात् तदा "मितां ह्रस्वः" स्यात् तदेव तु न सिध्यति "जनीजॄष्क्नसुरञ्जो-

ऽमन्ताश्च" इत्यत्र मित्त्वविधायके क्नसुसाहचर्येण दैवादिकस्यैव रञ्जेर्ग्रहणेनेह तत्त्वाप्रवृत्तेरिति वाच्यम् ? साहचर्यपरिभाषाया अनित्यत्वस्वीकारेणेह तदप्रवृत्तिस्वीकारात् । अतएव मित्त्वविधायके रञ्ज रागे इति भ्वादेर्दैवादिकस्य च ग्रहणमिति सर्वसम्मतः पन्थाः ।

नच शीङ्धातोः "शीङो धुक् लक् वलञ्" इति औणादिकेन वलञि वृद्ध्यर्थम् "अचो ञ्णिति" इत्यावश्यकमिति वाच्यम् ? वलञपेक्षया डैवलञस्तेन विधानादपि शैवल इतिसिद्धेरदोषात् । शैवलयति शैवलयते इत्युभयपदन्तु न प्रयोजनम् ? प्रातिपदिकगतानुबन्धमादाय पदव्यवस्थाभावस्य "ब्राह्मणमाणववाडवाद् यन्" इत्यत्रत्ययन्ग्रहणस्योत्तरार्थतासम्पादकभाष्यप्रामाण्येन साधितत्वात्, उणादीनामव्युत्पन्नप्रातिपदिकतया व्युत्पत्तिविषये तेषामचर्चणीयत्वात्, डैवलञो ञित्वस्य वोक्तत्वात् । नच क इवाचचारेति विग्रहे चकौ इति सिद्धये "अचो ञ्णिति" इत्यावश्यकमिति वाच्यम् ? तत्र "आत औ णल" इति स्थाने "आदौ णल" इति न्यासेन अवर्णात् परस्य णल औकारादेश इत्यर्थकेन चकौ इति सिद्धौ बाधविरहात् । नचैवम् उत्तमे णलि चकौ इत्येकमेव रूपं स्यात् । इष्यते तु "णलुत्तमो वा" इति णित्त्वेन "अचोञ्णिति" इति वृद्ध्या रूपद्वयमिति वाच्यम् ? तथापि "आत औ णिण् णलः" इति न्यासेन अवर्णात् परस्य णितो णल औकारादेश इत्यर्थः । एवञ्च उत्तमे "णलुत्तमो वा" इति णित्त्वविकल्पेन रूपद्वयसिद्धेर्निर्बाधत्वात् । एकाज्भ्य आचारक्विपोऽनभिधानस्य "कास्प्रत्ययात्" इति सूत्रभाष्यरीत्या सिद्धान्तभूतत्वेन क इवाचचार चकौ इत्यादेरनभिधानेन "आत औ णल" इत्यस्य यथास्थितत्वस्वीकाराच्च पाधातोरुत्तमे णलि रूपद्वयापत्तिः ।

**वस्तुतस्तु** भूशब्दादाचक्षाणण्यन्ताल्लटि शपि "प्रकृत्यैकाच्" इति टिलोपाभावे धातुविहितप्रत्ययत्वस्य णिच्यभावेन "सार्वधातुका" इति गुणाप्रवृत्त्या गुणोत्तरवृद्धेरत्राप्रवृत्त्या स्वतन्त्रवृद्धये "अचो ञ्णिति" इति वृद्धिविधायकस्यावश्यकत्वात् । एवं जजागार इत्यत्र जागृधातोर्लिटि णलि "जाग्रोऽवि" इति सूत्रे अणलि इति पर्युदासाद् गुणभावेन वृद्धये तदावश्यकत्वात् ।

## पतिस्समास एवेति—

अत्र "पतिर्वृत्तौ एव" इति न्यासप्रभृतयः "शेषो घ्यसखि" इतिसूत्र एव प्रायश उक्तास्तत एवावधेयाः ।

## यूस्त्र्याख्यौ नदीति ।

ननु अत्र सूत्रे यू इत्यत्र इश्च उश्च इति ह्रस्वयोर्द्वन्द्वं विधाय सवर्णग्रहणेन ईकारान्तस्य ऊकारान्तस्य च संज्ञाविधानमाहोस्वित् ईश्च ऊश्चेति दीर्घयोर्द्वन्द्वं कृत्वा तदन्तयोस्संज्ञा विधीयते ? ह्रस्वयोर्द्वन्द्वस्वीकारे सम्बुद्धौ मतिशब्दात् हे मते इत्यादेरसिद्धिप्रसङ्गात् । मतिशब्दस्य नदीसंज्ञया पर्यन्यवल्लक्षणप्रवृत्तिन्यायेन "अम्बार्थनद्योः" इति ह्रस्वापत्तेः । नच सम्बुद्धिह्रस्वे जातेऽपि ततो गुणेन हेमते इत्यादिसिद्धिस्स्यादिति वाच्यम् ? हे गौरि इत्यादौ ह्रस्वानन्तरं गुणापत्तिवारणाय ह्रस्वविधिसामर्थ्यात् पश्चाद् गुणो न भवतीति ज्ञापनाद्दोषतादवस्थ्यात् । यदि च दीर्घयोर्द्वन्द्वस्तदा यूशब्दात् औ विभक्तौ "दीर्घाज्जसि च" इति पूर्वसवर्णदीर्घनिषेधेन यणि य्वौ इति प्रसङ्गे सौत्र "यू" इति निर्देशानुपपत्तिः । तस्मात् उभयतस्स्पाशा रज्जुरिति ।

**अत्र केचित्—**ह्रस्वपक्षे मत्यादिशब्दे "शेषो घ्यसखि" इति घिसंज्ञया नदीत्वबाधात् न दोषः । नच "शेषो घि" इत्यत्र शेषशब्देन नदीसंज्ञकातिरिक्तानामेव ग्रहणेन भवदीयरीत्या मतिशब्देऽपि नदीत्वेन तत्र घिसंज्ञाया एवासम्भवेन कथन्तया नदीसंज्ञाबाध इति वाच्यम् ? अनुक्तार्थक ( उक्तभिन्नार्थक ) शेषग्रहणस्यैव तत्र सूत्रे खण्डनात् । अत एव कौमुद्यां शेषग्रहणं स्पष्टार्थमिति सङ्गच्छते । नच तत्र शेषग्रहणाभावे मतिधेनुशब्दाभ्यां ङेविभक्तौ "ङिति ह्रस्वश्च" इति नदीत्वपक्षेऽपि घिसंज्ञाया दुर्निवारत्वेन घित्वे "घेर्ङिति" इति गुणापत्तिरिति वाच्यम् ? तथापत्तावपि "आकडारादेका संज्ञा" इत्याकडारीयत्वेन निरवकाशया "ङिति ह्रस्वश्च" इति नदीसंज्ञया स्त्रीलिङ्गपुल्लिङ्गयोस्सावकाशघित्वस्य बाधेन दोषविरहात् । एवं दीर्घनिर्देशपक्षेऽपि यूशब्दात् औविभक्तेः "सुपांसुलुक्" इति लुकि निर्देशसिद्धौ न बाधकमिति वदन्ति ।

**परे तु** दीर्घनिर्देशे "ङिति ह्रस्वश्च" इत्यत्र "यू स्त्र्याख्यौ" इत्यतो यूपदसम्बन्धे यूभ्यां ह्रस्वस्य विशेषणत्वविरोधात् ह्रस्वमात्रस्य नदीत्वविकल्पे मातृशब्दान्ङयि मात्रे इत्यत्रापि "आण्नद्याः" इति आडापत्तिः । ह्रस्वनिर्देशे तु अनुवृत्ताभ्यां यूभ्यां ह्रस्वस्य विशेषयितुं शक्यतया इकोराकाराभिन्नह्रस्वग्रहणे न मातृशब्दे दोषः । नच ह्रस्वपक्षेऽपि "ङितिह्रस्वश्च" इति सूत्रे यू इति अनुवृत्त्या ( तयोर्ह्रस्वत्वेन ) एव सिद्धे ह्रस्वग्रहणं व्यर्थमिति वाच्यम् ? ह्रस्वबोधक यू इत्य-

नुवृत्तावपि ग्रहणशास्त्रबलेन दीर्घयोरपि ग्रहणापत्त्या मतिशब्दादाविव गौर्यादावपि ङिद्विषये गौर्यै इत्यादौ विकल्पापत्त्या गौर्ये इत्यादेरपि सिद्धिप्रसङ्गात्। इति ब्रुवते तन्न ? दीर्घनिर्देशेऽपि स्वरितत्वप्रतिज्ञाबलात् "ङितिहस्वश्च" इत्यत्र तयोरनुवृत्तौ ईकारोकारौ यौ ह्रस्वौ इति विशेषणसामर्थ्यात् ईकारोकारसम्बन्धिनोर्ह्रस्वयोरेव ग्रहणमित्यर्थोल्लाभेन मात्रे इत्यादौ विकल्पवारणसम्भवात्। इत्वोत्वजात्यवच्छिन्नानां ग्रहणस्य यू इत्यनेन बोधनाद् वा दोषासम्भवात्। यथाहि "राधो हिंसायाम्" इत्यत्र अनुवृत्तं "अत एकहल्" इत्यतः अत इति यद्यपि राधा विशेषयितुन्न शक्यते ह्रस्वदीर्घयोस्सामानाधिकरण्येन (अभेदेन) अन्वयासम्भवात् तथापि अत इति अत्वजात्यवच्छिन्नपरिमिति तथा प्रकृतेऽपि ।

येतु—न "राधो हंसायाम्" इत्यत्र अत इत्यनुवर्तते एकहल्मध्ये इत्युक्त्वापि धकारस्यैत्वाप्राप्तेरिति न दृष्टान्तत्वसम्भव इति वदन्ति तन्न ? "फणां च सप्तानाम्" इत्यत्र भ्राजिम्लाशोराकारस्य एकहल्मध्यस्थत्वाभावेन एत्वस्यान्त्यादेशत्व प्रसङ्गवारणाय तत्र अत इत्यस्यानुवृत्तेरावश्यकत्वेन दीर्घयोरपि आकारयोर्बोधनाय अत इत्यस्य अत्वजात्यवच्छिन्नत्वपरत्वस्वीकारस्यैव दृष्टान्तत्वाङ्गीकारात् ।

**वस्तुस्तु**—हे मते इत्यादौ कार्यकालपक्षे फलाभावेन घित्वस्याप्रवृत्त्या नदीत्वापत्तेर्ह्रस्वापत्तितादवस्थ्येन भाष्यकृता दीर्घयोर्द्वन्द्वस्यैव स्वीकारात् । अतः परं पाणिनितन्त्रक्रोडपत्रे स्पष्टम्, वयमपि शास्त्रार्थप्रकरणे द्वितीयभागे वक्ष्यामः ।

## आटश्चेति—

ननु अत्र लाघवात् "अटश्च"इत्येव सूत्रमस्तु अटोऽचि परे वृद्धिरेकादेश इति तदर्थः । एवञ्च अजादिधातुभ्यो लुङादौ "लुङ्लङ्लृङ्क्षु" इत्यटि वृद्धौ न दोष इति तदर्थम् "आडजादीनाम्"इति सूत्रं व्यर्थम् । नच ऐधत इत्यादौ पररूपमपवादत्वेन प्रबाध्य वृद्ध्या रूपसिद्धावपि अस्वपोऽहसन् इत्यत्र "अड्गार्ग्यगालवयोः" इति विहितस्याटस्सत्त्वेन "अतो रोरप्लुतात्" इत्युत्त्वेऽच्परत्वेन "अटश्च" इत्यनेन वृद्ध्यापत्तिरिति वाच्यम् ? तथाप्यत्र वृद्धिविधायके "उपसर्गादृति" इत्यतो धातोरित्यनुवर्त्य धात्ववयवेऽचि अटो वृद्धिरेकादेश इत्यर्थस्वीकारेण तत्र वारणसम्भवात् । नच तथापि अस्वपोऽस्ति इत्यत्र पूर्वान्तवद्भावेन ओकारेऽट्त्वमाश्रित्य धात्ववयवाच्परत्वस्य सुतरां सत्त्वेन वृद्ध्यापत्तिरिति वाच्यम् ? "आद्गुणः" इत्यस्मात् आदित्यनुवर्त्यआकाररूपाटोऽचि धात्ववयवत्वविशिष्टे वृद्धिरितिस्वीकारेण दोषविर-

द्वात् । नच तथासति "आण्नद्याः" इति सूत्रेणापि अडेव विधीयतां लाघवादिति वाच्यम् ? बहुश्रेयस्यै इत्यत्र "वृद्धिरेचि" इति वृद्धिम्प्रबाध्य "अतो गुणे" इति पररूपापत्तेः । अटो विधानस्य बहुश्रेयस्याम् इत्यत्र नुड्बाधनेन चारितार्थ्यात् । नच बहुश्रेयस्यै इत्यत्र प्राप्ताम् "वृद्धिरेचि" इति वृद्धिं पररूपं बाधताम् परन्तद्बाधेऽपि "अटश्च" इति वृद्धयैव निर्वाहोऽस्तु इति वाच्यम् ? तत्र अस्वपोऽहसन् इत्यत्र दोषवारणाय धातौ इत्यपकर्षस्य सद्य एव व्यवस्थापितत्वेन धात्ववयवाच्परत्वाभावेनेहाप्रवृत्तेः । नच शेखरोक्तरीत्या "अतो गुणे" इत्यस्यानन्तरं "अटो न" इति पाठेन सर्वार्थसिद्धौ "अटश्च" इत्यपि मास्तु इति वाच्यम् ? ऐन्दिदत् इत्यादौ वृद्ध्यनापत्तेः ।

शेखरस्तु "अटश्च" इत्यत्र चकारः पुनर्वृद्धिविधानार्थं इति रीत्या योज्यः । अन्येषान्तु अड्विधानसामर्थ्येन पररूपं प्रबाध्य बहुश्रेयस्यामित्यादौ "ह्रस्वनद्यापः" इत्यनन्तरं "ङेर्न" इति न्यस्य नुडभावमुपपाद्य "अण्नद्याः" इत्येव न्यास इति मतन्तु न युज्येत ? तादृशव्यापारेऽतीव गौरवापत्तेः । नच "अटश्च" इत्यस्य ऐन्दिदत् इत्यादौ सावकाशतया आतीत् इत्यादौ रत्वाद् "अतो गुणे" इति पररूपस्यैव प्रवृत्तेरनिष्टापत्तिरिति वाच्यम् ? "उस्योमाङ्क्ष्वाटः" इत्यस्यैव प्रवृत्तेर्निर्णयात् ।

एवञ्च अस्वपोऽहसन् इत्यादौ अन्तरङ्गपरिभाषयैव वृद्धिवारणसम्भवात् धातावित्यस्यापि नापकर्षो योग्यः । एवञ्च पदैकसम्बन्धिवर्णापेक्षत्ववत्त्वेन वृद्धिरन्तरङ्गा, पदद्वयसम्बन्धिवर्णद्वयापेक्षत्ववत्त्वेन चोत्वम् बहिरङ्गमिति भावः । नच "नाजानन्तर्य्ये बहिष्ट्वप्रक्लृप्तिः" इति परिभाषयाऽन्तरङ्गपरिभाषाया निषेध इति वाच्यम् ? परिभाषाया निषेधिकाया अस्या अनित्यत्वादिह लक्ष्यानुरोधादप्रवृत्तेः । नच "आडजादीनाम्" इति सूत्राभावे आस्ताम् आसन् इत्यादीनां सिद्धिर्न स्यात् "श्नसोरल्लोप" इति लोपे पश्चात् "अटश्च" इत्यस्याप्राप्तेरिति वाच्यम ? अन्तरङ्गत्वात् प्रागेवाटि वृद्धौ च "श्नसोरल्लोप" इत्यस्याप्रवृत्तेः । न च "वार्णादाङ्गम्बलीयः" इति परिभाषया वृद्धेरपि प्रागल्लोपप्रसक्तिरिति वाच्यम् ? समानाश्रये एव तत्प्रवृत्तेः । वृद्धेः प्रागल्लोपे "श्नसोः" इति सूत्रीयतपरकरणेन वार्णपरिभाषाया अनित्यत्वाद् वा । नच वैदिके प्रकरणे आनट् आवः इत्यत्र "छन्दस्यपि दृश्यते" इत्याडागमो राद्धान्ते "आडजादीनाम्" इति सूत्रात् आडित्यनुवर्त्त्येष्टः, कथमिदानीं "आडजा"

इति सूत्राभावे स्यादिति वाच्यम् ? "आट् छन्दसि दृश्यते" इति तत्रैव प्रपठ्य अनुवृत्तेरनावश्यकत्वात् ।

## सर्वनाम्नस्स्याड्ढ्रस्वश्चेति—

ननु अत्र सूत्रे स्याड्ग्रहणं ह्रस्वग्रहणञ्च परित्यज्य "सर्वनाम्नोऽसुङ्" इत्येव सूत्रमस्तु तथैव आबन्तस्य सर्वनाम्नोऽसुङ् स्यादिति तदर्थेन अन्तरङ्गत्वाद् याटि ततोऽसुङि सर्वस्यामितिप्रभृतिरूपसिद्धेः । नच संज्ञाकृतबहिरङ्गत्वस्यानाश्रयेण टापि याटि पूर्वमसुङि सान्तत्वेन मुत्वानापत्त्या पूर्वमुत्वेऽसुङि च अमुष्यै इत्यादीनामसिद्ध्यापत्तिरिति अस्सेस्सकारस्य यत्र इत्यादिव्याख्यानस्य अदस्यतीत्यादौ मुत्ववारणाय कृतस्येहाश्रयणेन मुत्वसिद्धौ तु तादृशव्याख्यानेनेह अमुमुयङ् अदद्रयङ् इत्यादिवत् अदस्यै अमुष्यै इत्यादिविकल्पेन रूपद्वयापत्तेरिति वाच्यम् ? "अदसोऽद्रेः पृथङ् मुत्वम्" इत्यादिकारिकायामेके इत्युक्त्या अस्सेर्यत्रेति पक्षस्यैव मुख्यतया अदद्रयङ् इत्यादावेव रूपद्वयस्येष्टतया अमुष्यै इत्यादेःसिद्धौ बाधकविरहात् । नच तथापि सर्वाशब्दान्ङयि संज्ञाकृतबहिरङ्गत्वस्यानाश्रयणात् नित्यत्वाच्च पूर्वमसुङि पश्चादाबन्तत्वविरहेण "याडापः" इत्यस्याप्रवृत्त्या सर्वस्यै इत्यस्यासिद्धिप्रसङ्ग इति वाच्यम् ? तथापि "सर्वनाम्नोऽसुङ् च" इति चकारविशिष्टन्यासेन चकारेण याटोऽप्यनेनैव विधानात् सर्वस्यै इत्यादेः सिद्धेः ।

ननु एवमपि "विभाषा द्वितीयातृतीयाभ्याम्" इति सूत्रेण असुङ इव याटोऽपि वैकल्पिकत्वापत्त्या द्वितीयायै इत्यादेरसिद्धिप्रसङ्गः । नच असुङ्समुच्चितयाटस्तेन वैकल्पिकत्वबोधने सामर्थ्याभावान्न दोषः "विभाषाद्वि" इत्यादेः प्रत्याख्यानाद्वा इति वाच्यम् ? तथापि असुङो याडपवादत्वेन तद्विषये याटो दुर्लभतापत्तेः । नच सर्वनाम्नोऽसुङ् ङितो याडिति विषयभेदे कथमपवादतेति वाच्यम् ? "अचि रऋत" इति भाष्येण विषयभेदेऽपि बाध्यबाधकभावस्वीकारात् । नच "सर्वनाम्नोऽस्यङ्" इति न्यास एवास्तु तथैव सर्वदोषपरिहारसम्भवादिति वाच्यम् । एवम् अस्यङ्विधाने इदंशब्दात् स्त्रीत्वे ङयि अस्यङि हल्परत्वाभावेन "हलिलोपः" इत्यस्याप्रवृत्त्या अस्यै इत्यादेरसिद्धिप्रसङ्गात् । तत्र "अपि लोप" इति न्यासेन वारणेऽपि स्वरे दोषापत्तेः ।

**केचित्तु** "हलि लोपः" इत्यत्र "वलि लोपः" इति न्यासः "अनाप्यकः" इत्यस्माच्च अन इत्यनुवर्त्य अनो लोपो वलीत्यर्थान्न दोष इति ।

**अन्येतु** "अश्वक्षीरवृषलवणानामात्मप्रीतौ क्यच्"इति सूत्रादग्रे (अनन्तरम्) "सर्वनाम्नोऽच्च याटः सुट्" इति ततः "आमि" ततः "त्रेस्त्रयः" इति प्रभृतयो यथान्यासम्। एवञ्च सामर्थ्याद्यनाश्रयणान्महल्लाघवम्।

**सिद्धान्तिनस्तु** "आमि सर्वनाम्नः सुट्" इत्यनन्तरम् "याटो ह्रस्वश्च"इति न्यासः। दीर्घोच्चारणसामर्थ्याच्च न याटो ह्रस्वत्वं सर्वत्र। अकारोच्चारणसामर्थ्येनैव पररूपवारणसम्भवे दीर्घोच्चारणस्य न पररूपबाधकत्वप्रयोजनम् इति मनोरमा। **अन्येतु**–"आमि सर्वनाम्नस्सुट्" इत्यस्यानन्तरम् "अच्च याटः, याटोऽच्च"इति वा न्यासः। पूर्वस्मात् सूत्रात् "आमि सर्वनाम्न" इत्यतः सर्वनाम्नस्सुडित्यंशमनुवर्त्त्यंयाटस्सुट् सर्वनाम्नोऽकारोऽन्तादेश इत्यर्थाद् बृहल्लाघवेन निर्वोढुमीहन्ते।

**अपरेतु** "सर्वनाम्नस्याट्" इति सूत्रापेक्षया "सर्वनाम्नोऽस्यङ्" इति न्यासयन्ति अकारोच्चारणसामर्थ्याच्च न "अतो गुणे" इति पररूपमिति वदन्ति। परन्तु तत्र अकारस्योच्चारणार्थत्वस्य वक्तुमशक्यत्वेन पररूपापत्तिर्दुर्वारैवेति विचिन्त्यताम्।

## ङिति ह्रस्वश्चेति—

ननु "ङिति ह्रस्वश्च वामि" इत्युभयोः स्थाने इयङुवङ्स्थानौ स्त्रीशब्दभिन्नौ नित्यस्त्रीलिङ्गौ यावीदूतौ ह्रस्वौ च याविवर्णोवर्णौ स्त्रियां तौ नदींसंज्ञौ वाऽजादौ प्रत्यये परे इत्यर्थकेन "वाचि ह्रस्वश्च"इति लघुनैव निर्वाहे कथम्पाणिनीयं सूत्रद्वयम्। तावतैव मत्यै मतये इत्यादीनां सिद्धिसम्भवात्। इति चेन्न ? श्रीणाम् इत्यादौ अजादित्वन्निमित्तीकृत्य जायमाना नदीसंज्ञाऽजादित्वविघातक "ह्रस्वनद्यापः" इति नुटं कथमुत्पादयेतेति सन्निपातपरिभाषावताराय "वामि" इति सूत्रस्यावश्यकत्वात्। राद्धान्ते च नुड्विशिष्टे यदागमपरिभाषया आम्त्वेन सन्निपातविघाताभावात्। नच नव्यन्यासकृतो ममापि यदागमन्यायेन नुड्विशिष्टेऽजादित्वमक्षतमिति कथं सन्निपातविरोध इति वाच्यम् ? 'वर्णग्रहणे यदागमपरिभाषा न प्रवर्त्तते' इति ज्ञापनस्य "आने मुक्" इत्यादिना शेखरादौ ज्ञापितत्वेन वर्णत्वव्याप्यधर्मघटितत्वाद् अजादित्वादेः यदागमन्यायेन आनेतुमशक्यत्वात्। मतिश्चोमा चेति द्वन्द्वेऽच्परत्वेन नदीत्वे घित्वस्याभावात् (बाधात्) मतिशब्दस्य पूर्वनिपातानापत्तेश्च। नच राद्धान्ते मतिश्च चित्रङ् चेति द्वन्द्वे चित्रङो ङित्वेन तस्मिन् परे नदीत्वाद् घित्वाभावेन मतिशब्दस्य पूर्वनिपात इष्टोऽपि न भवेदेतदर्थम्प्रत्ययाक्षेपेण ङितः

प्रत्ययस्य ग्रहणेन दोषवारणमिव नव्यन्यासकृतो ममापि मते तथैव न दोष इति वाच्यम् ? महाभाष्यकृता भगवता [‘ङितिह्रस्वश्च’ इत्यत्र नित्यस्त्रीत्वसम्बन्धः, अन्यत्र “वामि” इति सूत्रेण न तत्सम्बन्धः अत एव अतिश्रियाम् अतिश्रीणाम् वा ब्राह्मणानाम् इति सिद्धयति ] इत्युपपत्तेः “वाचि ह्रस्वश्च” इति न्यासेऽसम्भवत्त्वेन भाष्यस्यासंगतिवारणाय पाणिनीयन्यासस्यैव श्रेयस्करत्वात् ।

## अतोऽम् इति—

ननु अत्र अदन्तादङ्गात् क्लीबात्परयोः स्वमोः म् इत्यादेशस्स्यादित्यर्थकः “मतः” इत्येव न्यासोऽस्तु । नच “यच्छब्दयोगः प्राथम्यं स्यादुद्देश्यस्य लक्षणम्। यच्छब्दयोगः पाश्चात्यं स्याद् विधेयस्य लक्षणम् ॥” इत्यभियुक्तोक्त्या विधेयस्य मकारस्य प्राक् करणं विरुद्धमिति वाच्यम् ? “वृद्धिरादैच्” अपृक्त एकाल् प्रत्ययः” इत्यादौ विधेयस्यापि उद्देश्यात् प्राग् दर्शनेन तादृशाभियुक्तोक्तेः प्रायिकत्वाङ्गीकारात् । यथापाणिनीयेऽपि अमितिच्छेदमकृत्वा “म्” इतिच्छेदं कृत्वा वा मदीयतात्पर्यवर्णनसम्भवात् ।

नच लाघवानुरोधिनश्शाब्दिका लाघवमनुरुन्ध्यैव न्यासान् चिकीर्षन्तीति प्रकृते लाघवाभावात् “अतोम्” इत्यत्र म् इतिच्छेदोऽमितिच्छेदो वेति किमर्थन्दुराग्रह इति वाच्यम् ? म् इतिच्छेदे “एङ्ह्रस्वात्”इतिसूत्रे राद्धान्ते हल्ग्रहणानुवृत्तेरभीष्टाया अपि अकर्त्तव्यतालाघवात्, सम्बुद्धिग्रहणस्य वैयधिकरण्येनान्वयसिद्धान्तस्य क्लिष्टस्य राद्धान्तिकस्य चात्र पक्षेऽनावश्यकत्वेन सामानाधिकरण्येनैवान्वयसम्भवेनाकर्त्तव्यतालाघवाच्च । नचैवम् न्यासे ज्ञानम् इत्यादौ सामादेशे घञादिपरत्वेन “सुपि च” इति दीर्घापत्तिः ? सन्निपातपरिभाषयैव तद्वारणसम्भवात् । नच “कष्टाय क्रमणे” इत्यादिनिर्देशेन सन्निपातपरिभाषाया दीर्घविषयेऽप्रवृत्तिज्ञापनेन कथन्दोषोद्धार इति वाच्यम् ? ज्ञापकस्य विशेषापेक्षत्वेन चतुर्थ्येकवचने एव परिभाषाया अप्रवृत्तिज्ञापनेन अन्यत्र दीर्घविषये तत्प्रवृत्तौ बाधाभावात् । अत एव “अत एव सुपिचेति दीर्घो यद्यपि परस्तथापीह न प्रवर्त्तते सन्निपातपरिभाषाविरोधात्” इति कौमुदी सङ्गच्छते ।

नच ज्ञानशब्दाद् द्वितीयैकवचनेऽमि तस्यापि मादेशे प्राप्ते आदेः परस्य इति साहाय्येन अमोऽकारस्य मादेशे ज्ञानम्म् इति मकारद्वयश्रवणापत्तिरिति वाच्यम् ? एवं सत्यपि “संयोगान्तस्य लोपः” इति द्वितीयमकारस्य लोपेन निर्वाहसम्भवात् ।

नच "यणः प्रतिषेधो वाच्यः" इति वार्त्तिकप्रत्याख्यानाय भाष्यकृता "संयोगान्तस्य लोपः" इति सूत्रे "झलो झलि"इति सूत्राद् झल्ग्रहणमपकृष्य संयोगान्तस्य झलो लोप इतिलोपविधायकसूत्रस्यार्थाभिमतेः प्रकृते मकारस्य झल्प्रत्याहारे पाठाभावेन कथं लोपसम्भव इति वाच्यम् ? "अमो मश्"इति सूत्रे भाष्ये सर्वादेशत्वप्रयोजकशित्त्वप्रत्याख्यानाय "मश्" इत्यपेक्षया मम् इत्यादेशो मद्वयात्मकः एकस्य च संयोगान्तलोपः इति व्याख्यातन्तयैव रीत्या "संयोगान्तस्य लोपः"इत्यत्र झल्ग्रहणापकर्षपक्षेऽपि संयोगान्तस्य लोपो भवति इति संयोगान्तस्य झलो लोपः भवति इति च वाक्यद्वयाङ्गीकारेण प्रथमार्थेनैव सिद्धौ द्वितीयार्थो नियमार्थः क्वचिदझलोऽपि लोपः। अत एव गिरौ वेश्म यस्य स गिरिवेश्मा तमाचष्टे इत्याचक्षाणण्यन्तात् क्विपि णिलोपे गिरिवेश्म् इत्यत्र मकारस्य संयोगान्तलोपेन गिरिवेडितिसिध्यति अन्यथा मकारस्य झल्त्वेन लोपानापत्तिरिति कल्पनेन द्वितीयैकवचने ज्ञानम् इत्यादिसिद्धेरनपायात्। अतिजरसमित्यादौ तु न दोषः ? अमि लुकोऽपवादमम्भावं बाधित्वा परत्वाज्जरस् इति मूले एव कौमुद्यामुक्तत्वात्। सौ जरसादेशानापत्तिस्तु पक्षद्वयेऽपि समा ? राद्धान्तेऽपि सन्निपातपरिभाषया आदेशस्यानिष्टत्वात्। इति नात्र न्यासे दूषणम्पश्यामः।

## अद्ड्डतरादिभ्यः पञ्चभ्य इति—

ननु अत्र "डतरादीनाम् पञ्चानान्दुक्" इत्येव न्यासोऽस्तु दुकि स्वमोर्लोपेन सिद्धेरिति चेन्न ? कतरशब्दात् णिचि क्विपि टिलोपे अल्लोपस्य स्थानिवत्त्वेन पुनष्टिलोपविरहे दुगागमे कतर्द इति रूपापत्तेः। राद्धान्ते चादडि कतरदिति। किञ्च तदनुकरणे स्त्रीत्वविवक्षायाम् "उगितश्च" इति दुक उगित्त्वेन उगिदन्तात् ङीप्प्रत्ययापत्तेः। अथ च उक्तङीबन्तात्तरप्प्रत्यये "उगितश्च" इति ह्रस्वविधायकेन विकल्पेन ङीपो ह्रस्वापत्तेः।

**वस्तुतस्तु** "सर्वादीनि"इति सूत्रीय–अनुपसर्जनादिति प्रत्याख्यानभाष्योक्तरीत्या अदडो दुको वा सर्वाद्यन्तर्गणकार्यत्वेनोपसर्जने तादृशि कतरशब्दे अप्रवृत्तेरिष्टतया तादृशामनभिधानकल्पनेन, "अतोऽम्" इत्यतोऽत इत्यनुवर्त्त्यादन्तानां डतरादीनां वाऽत्र दुग्विधायके ग्रहणबोधनेन दोषाभावात् न्यासोऽयं युक्त एव। प्रकृतिवदनुकरणस्यानित्यत्वाच्च न ङीबादिदोषावकाशोऽनुकृते इति विभावयिषन्ति साधवः।

## टेरिति—

ननु अस्य सूत्रस्य "भस्य" इत्यधिकारविशिष्टस्य डिति परे भस्य टेर्लोप इत्यर्थस्वीकारे डित्वसामर्थ्यादभस्यापि टेर्लोपकल्पने सुमहत्क्लेशसम्भवात् "भस्य" इत्यधिकारपरित्यागेन डिति टेर्लोप इत्यर्थमात्रस्वीकारेण सर्वदोषवारणसम्भवेन कथन्नायमुप्रकारः। नच तदभावे पञ्चानां संख्यानाम्पूरण इत्यर्थे पञ्चन्शब्दात् "तस्य पूरणे डट्" इति डटि "नान्तादसंख्यादेर्मट्" इति मडागमे च यदागमपरिभाषया विशिष्टे प्रत्ययत्वं स्वीकृत्य पदत्वात् भत्वाभावेन "नलोपः" इति नलोपः राद्धान्त इष्ट इदानीं "टेः" इत्यस्यापि प्रवृत्त्यापत्तौ पञ्चम इतीष्टरूपासिद्धिरिति।

ननु "तस्य पूरणे" इति डटो विधायकेन टट एव विधानमस्तु तथाच डित्वाभावेन "टेः" इत्यस्याप्रवृत्त्या पञ्चम इत्यस्य सिद्धिः। नच तथा सति प्रथमटकारवैयर्थ्यम्? इष्टापत्तेः, अट एव विधेयत्वात् इति चेन्न? राद्धान्ते डटि डित्वाट्टिलोपेन एकादश इति सिध्यति इदानीमटो विधाने डित्वाभावेन "टेः" इत्यस्याप्राप्तेरिष्टासिद्धेः। नच तत्र अट् इति न्यासेऽपि "नस्तद्धिते" इति लोपेनैव एकादशेत्यस्य सिद्धिसम्भवोऽस्ति इति न दोष इति वाच्यम्? तत्र वारणेऽपि विंशतेःपूरण इति विग्रहे डटि डित्वात् "तिविंशतेर्डिति" इति सूत्रेण तिशब्दस्य लोपे विंश इत्यस्य राद्धान्तम्। अधुना अटि डित्वाभावेन "तिविंशतेः" इत्यस्याप्रवृत्त्या तद्रूपासिद्धेर्दुर्वारत्वात्। नच तत्रापि "तिविंशतेरटि" इत्येवन्न्यासेन अध्यपि तत्प्रवृत्त्या न दोष इति वाच्यम्? तथापि "वहुव्रीहौ" इति डज्विधायकेनापि अडेव (अट् एव) विधीयतान्तथाच "तिविंशतेरटि" इत्यस्य प्रवृत्त्या न दोष इति वाच्यम्? तथापि "टेः" इत्यत्र अटीत्यस्य सम्बन्धे स्त्रीशब्दे स्त्यायेते शुक्रशोणिते अस्यामिति विग्रहनिष्पन्ने स्त्यै ष्ट्यै शब्दसंघातयोः इति स्त्यैधातोः "स्त्यायतेर्ड्रट्" इति ड्रटि टिलोपे मकारस्य "लोपोव्योः" इति लोपे टित्त्वात् ङीपि स्त्री इति राद्धान्तम्' इदानीन्तत्रापि लोपापत्तेः। "टेः" इत्यत्र असम्बन्धेन राज्ञः इत्यत्राप्तेः। क्रटं विधायाऽऽलोपेन वारणेऽपि पञ्चम इत्यत्र दत्तापत्तितादवस्थ्यात् "भस्य" इत्यधिकारस्यावश्यं कर्त्तव्यत्वात्।

## सावनडुहः इति—

ननु "वसुस्रंसुध्वंस्वनडुहान्दुः" इतिन्यासं कृत्वा उगित्त्वसामर्थ्याच्च असि-

द्धत्वम्प्रबाध्य "उगिदचाम्" इति नुमि अनड्वानित्यादेः सिद्ध्या "वसुस्रंसु" इति सूत्रेण दत्वविधानं "सावनडुहः" इति नुम्विधायकं सूत्रञ्च मास्तु । नच डुग्विधाने उगित्त्वान्ङीपि अनडुहीतरा इत्यत्र "उगितश्च" इति ह्रस्वविकल्पप्रसङ्गः ? तथापि "षिद्गौरादिभ्य" इति ङीषा ङीपो बाधात् , ऐषुमतीतरेत्यत्र ह्रस्वविकल्पवारणाय विहितविशेषणाश्रयणात् । इति चेन्न ? स्वनड्वान् स्त्रीत्यत्र उपसर्जनत्वे गौरादिङी-षोऽप्रवृत्त्या "उगितश्च" इति ङीबापत्तेः । ङीपः साक्षात् पदत्वविघातकत्वाभावात् न सन्निपातपरिभाषया तत्र निर्वाहः । परमत्रानेकत्रानेककष्टापेक्षया यथान्यासस्यैव रमणीयत्वात् ।

## षट्चतुर्भ्यश्चेति—

ननु "ष्णरान्ता षट्"इति न्यासं कृत्वा षान्तनान्तरान्तसंख्यावाचकशब्दानां षट्-संज्ञा भवतीत्यर्थवर्णनेन रान्तचतुरादिसंख्यावाचकस्यापि षट्त्वादेव चतुर्णामित्या-दावपि नुट्सिद्धेः "षड्भ्यश्च" इतिमात्रन्यासेन सिद्धौ अत्र सूत्रे चतुर्ग्रहणं किमर्थम्। नच तथा न्यासे चत्वार इत्यादौ "षड्भ्यो लुक्"इति जसो लुगापत्तिरिति वाच्यम् ? लुग्विधायके "अर्षड्भ्यो लुक्" इति न्यासेन रेफान्तभिन्नषट्संज्ञकेभ्यो जश्शसोर्लु-गित्यर्थवर्णनेन प्रकृते तदप्राप्तेः । नच चतुर्णाम् इत्यत्र नुट्सिद्धये "षट्चतुर्भ्यश्च" इत्यत्र चतुर्ग्रहणम्प्रत्याचक्षाणेन भवता सामान्येन षट्संज्ञां कृतवता जसि शसि वा लुगापत्तिपरिहाराय "अर्षड्भ्यः" इति न्यासकरणे "प्रक्षालनाद्धि पङ्कस्य दूरादस्प-र्शनं वरम्" इति न्यायेन महदनौचित्यम् इति वाच्यम् ? "षट्चतुर्भ्यो हलादिः" इतिसूत्रे षट्त्वादेव सिद्धे चतुर्ग्रहणाकरणविशिष्टलाघवस्यानुसन्धानात् । नच "षट् कतिकतिपयचतुरान्थुक्" इत्यत्रापि षट्त्वादेव चतुश्शब्दग्रहे सिद्धे चतुर्ग्रहणाक-रणलाघवञ्चेति भ्रमितव्यम् ? तत्र षट् इति शब्दस्वरूपस्यैव ग्रहणेन वैयर्थ्यश-ङ्काया अनवकाशात् । अन्यथा कतिकतिपययोरपि वैयर्थ्यापत्तेः ।

नच राद्धान्तेऽपि तादृशविशिष्टलाघवानुरोधेन कथं षट्शब्देन षट्संज्ञाग्रहण-न्नेति वाच्यम् ? संज्ञापरत्वे नान्तसंख्यावाचकानामपि षट्त्वात् तेभ्यः थुगापत्तेर्दुर्वा-रत्वापत्तेः । नच मडागमेन तद्बाधे न दोष इति वाच्यम् ? असंख्यादेरिति पर्युदासात् एकादश पञ्चदशेत्यादौ थुगापत्तेर्दुर्वारत्वात । नच "नान्तान्मट्" असंख्यादेः" इति योगविभागेन न्यासं कृत्वा द्वितीययोगस्य नान्तात् ंख्यादेर्मट्थुकौ न स्त इति भावार्थेन एकादशेत्यादौ दोषवारणसम्भव इति वाच्यम् ? अन-

न्तरस्य विधिः प्रतिषेधः वेति न्यायेन मट एव निषेधात् थुगापत्तेर्दुर्वारत्वादिति चिन्तनीयम् ।

## किमः क इति—

ननु एतत्सूत्रापेक्षया लघुभूतः "इमः" इत्येवास्तु "त्यदादीनामः" सूत्रस्थ-पदद्वयमनुवर्त्य त्यदादीनामिमोऽकारः स्याद् विभक्तौ इत्यर्थकरणेनैव कःइत्यादि-सिद्धेः । नच किंशब्दस्य द्विशब्दानन्तरं सर्वादौ पाठेन त्यदादिसूत्रे 'द्विपर्यन्ताना-मेवेष्टिः' इतिभाष्यकारेष्ट्या त्यदादिषु किमोऽपाठेन कथम् "इमः" इति न्यासे कः इत्यादिसिद्धिरिति वाच्यम् ? द्विशब्दात् प्रागेव किंशब्दस्य पाठकरणात् । एवञ्च किंशब्दस्य द्व्याद्यन्तर्गतत्वात् सर्वनामत्वादेव सिद्धे "किंसर्वनामबहुभ्योऽद्व्यादि-भ्यः"इत्यत्र किमोऽपि ग्रहणन्न कार्यमिति परं लाघवम् । नच "कुतिहोः" इत्यादौ अनुवृत्त्यर्थमेव "किमः कः"इत्यत्र किंग्रहणमिति वाच्यम् ? "उतिहोः"इति पठित्वा इमोऽनुवृत्तौ इम एव उत्वविधानाददोषात् । नच "क्वाति"इतिसूत्रेऽनुवृत्तये किमो ग्रह इति वाच्यम् ? "उतिहोः" इति न्यस्ते त्यदादीनामिम उःस्यात्तकारादौ हकारादौ अति चेत्यर्थे वर्णनेन उकारे यणि क्व इत्यस्य सिद्धौ वाधकविरहात् । अङ्गवृत्तपरि-भाषया च न "ओर्गुण" इति गुणापत्तिः ? इति **चेदत्रोच्यते**—किम्शब्दात् "अव्ययसर्वनाम्नाम्" इत्यकचि तन्मध्यपतितन्यायबलेन ककिम्शब्दस्य कादेशा-र्थं "किमः क"इत्येवमारम्भात् । नच निर्दिश्यमानपरिभाषासहकारेण अकज्विशिष्टस्य निर्दिश्यमानत्वाभावेन न कादेश इष्यते इति वाच्यम् ? गुरुभूतन्यासकरणे सूत्र-कारश्रमात् निर्दिश्यमानपरिभाषाया इहाप्रवृत्तिकल्पनात् , सूत्रस्यास्य आवृत्त्या वा तादृशपरिभाषावाधात् इत्यलम् विस्तरेण ।

## इदमो मः इति—

ननु सूत्रस्यास्य स्थाने "मो मः"इति विन्यस्य "त्यदादीनाम" इत्यतः त्य-दादि इत्यनुवर्त्य मान्तत्यदादीनाम्मकार एवादेशः सौ इत्यर्थस्वीकारेण तादृ-शस्येदंशब्दस्यैव लाभेन दोषविरहादिष्टसिद्धेः । नच किंशब्दोऽपि तादृशः ? द्विप-र्यन्तानामेव त्यदादित्वेष्ट्या ततो बहिर्भूतस्य किमृशब्दस्यातथात्वात् । नचैवम् "दश्च" यस्सौ" इत्यादिष्वपि त्यदादिपदस्यानुवृत्त्यापत्त्या एतेषाम् पर्यायतया प्रवृ-त्त्यापत्तेः । नच "दश्च" इत्यस्य सामान्यतो विभक्तिनिमित्तकतया विशेषनिमित्तक-

तथा विशेषनिमित्तकतया "सामान्यशास्त्रतो नूनं विशेषो बलवान् भवेत्" इति रीत्या बाधसम्भवात् क्व पर्यायत्वापत्तिरिति वाच्यम् ? तथापि त्यदादित्वनिमित्तकत्वस्य सुनिमित्तकत्वस्य चोभयत्राविशेषात् "यस्सौ, तदोस्स" इत्यनयोः पर्यायत्वापत्तितादवस्थ्यात् । राद्धान्ते च "यस्सौ" इत्यस्य इदंविषयतया न दोषसम्भवोऽपि । न च "दश्च" इति सूत्रात् प्राक् "इदोऽय पुंसि" इति प्रपठ्य तस्मादेव च पूर्वपठितात् "दश्च" इत्यत्र इद इत्यस्यानुवृत्त्या त्यदादेरिदो दकारस्य मकार इत्यर्थेन "यस्सौ" इत्यत्रापि तथैवत्यदादेरिदो यकारस्स्यात्सौ इत्यर्थेनापि विशेषविहितेन यदेशेन सादेशस्य बाधात् न "यस्सौ" तदोः स"इत्यनयोः पर्यायत्वापत्तिः, "अदस औ सुलोपश्च" इत्यत्र अदस इति योगम्पृथक्कृत्य अदस एव दस्य सत्वं नान्यस्येतिभाष्यनियमात् "तदोस्सः" इत्यत्र अनन्त्ययोरिति प्रत्याख्यानाय कृताद् वेति वाच्यम् ? तथा दोषाभावेऽपि पारायणादावदृष्टहान्यापत्तेः, "वर्णेनाप्यनर्थकेन न भवितव्यं किम्पुनरियता सूत्रेण" इत्यादिभाष्यरीत्या दृष्टार्थालाभेऽपि पाणिनिकृतन्यासेऽदृष्टार्थकत्वस्यैवोपगमात् ।

## यस्सौ इति—

ननु "यस्सौ" इदोऽयपुंसि" इदमोमः" इति त्रिसूत्र्याः स्थाने "इदमोयमस्सौ' इयमः स्त्रियाम्" इत्येवास्तु सूत्रद्वयम् । आदेशे मकारस्येत्ववारणार्थमुच्चारणार्थकाकारसत्त्वेन सौ परे स्त्रियामियंविधानेन पुंसि च अयंविधानेन त्यदाद्यत्वस्य च मकारोच्चारणसामर्थ्याद् बाधात् "सर्वविधिभ्यो लुग्विधिर्बलवानि"तिन्यायेन लुक एव प्राबल्यात् प्राक् प्रवृत्त्या "नलुमता" इति प्रत्ययलक्षणप्रतिषेधात् सुपरत्वाभावेन नपुंसके आदेशप्रसक्तेरभावाददोषात् सर्वेष्टसिद्धेः । नच तथा सति "अनाप्यकः" इत्यत्र इदम एवानुवृत्त्या तस्यैव अनेकाल्त्वात् सर्वादेशे मकारान्तत्वेन हलन्तत्वात् अनेन इतीष्टरूपानापत्तिः ? अनादेशविधायके "अनाप्यकः" इत्यत्र अन इत्यदन्तादेशविधानात् सर्वादेशेन रूपसिद्धेः । आभ्यामित्याद्यर्थञ्च "हल्यश्" इति न्यासेन "हलि लोपः" इति परित्याज्य सर्वादेशत्वसम्पादनात् सिद्धिः । इति चेन्न ? राद्धान्ते तन्मध्यपतितन्यायेन अकज्विशिष्टस्य इदंशब्दस्य एकदेशस्य इदभागस्य अयाद्यादेशे पुंसि अयकम् , स्त्रियाम् इयकमिति भवति । अधुना सर्वादेशे अयम् इयमित्यापत्तेस्तादवस्थ्यात् पाणिनीयन्यासस्यैव मन्तव्यत्वात् ।

## न संयोगादिति—

ननु संज्ञाशब्दानामर्द्धमात्रिकत्वनियमेन संयोगस्य च संज्ञात्वेन वकारमकारयोः संयोगविशेषणत्वेन सिद्धौ अन्तग्रहणं स्पष्टार्थमिति, संयोगपदञ्चावश्यकम् पर्याय-शब्दान्तरस्य तत्स्थाने समुच्चारणे लाघवाननुसन्धानात् इति शेखरः । नच हलः परौ यौ वकारमकारौ ताभ्याम्परस्यानोऽकारस्य लोपो नेत्यर्थकेन "नहलो वमात्" इति न्यासेनैव सर्वेष्टसिद्धौ किंगुरुभूत "न संयोगात्"इति पाणिनीयन्यासेनेति चेन्न ? तथा यज्वनः ब्रह्मण इत्यादिसिद्धावपि राजानं वनतीति राजवानः तान् राजवनः इत्यत्र वकारस्य हल्परत्वाभावेन निषेधाप्रवृत्त्या अल्लोपापत्तेः । राद्धान्ते तु संज्ञायां नलोपस्यासिद्धत्वात् वान्तसंयोगात् परस्यानः सत्त्वेन लोपसिद्धिः । नच "नलोपः सुप्"इति सूत्रे संज्ञाशब्देन घिसंज्ञाया एव ग्रहणं दत्तदण्डिनौ दण्डिदत्तौ इत्यादिभा-ष्योदाहरणादिति प्रकृते राद्धान्तेऽपि तत्प्रवृत्तिर्नेष्टेति वाच्यम् ? तथापि णिजन्तात् पटुशब्दान्मनिनि टिलोपणिलोपयोः पण्मन इत्यत्र टिलोपस्य णिलोपस्य वा स्थानि-वत्त्वेन मकारस्य हलः परत्वाभावेन निषेधानापत्त्या लोपापत्तेः । राद्धान्ते तु संयो-गसंज्ञायाः पूर्वपरोभयविधित्वेन पूर्वस्यैव विधौ स्थानिवत्त्वस्वीकृत्या प्रकृते स्थानि-वत्त्वाप्रवृत्त्या अल्लोपाभावसम्पादनात् । तस्मात् पाणिनीयन्यास एव साधीयान् ।

## श्वयुवमघोनामतद्धिते इति—

ननु "अचतुरविचतुर" इति सूत्रे उपशुनमित्यत्र सम्प्रसारणनिपातनात् "श्व-युवमघो" इति सूत्रेण तद्धिते परे सम्प्रसारणन्न भवतीति कल्पनेन तद्धिते सूत्रस्या-स्य न प्रवृत्त्यापत्तिरिति तदर्थं कृतमतद्धितग्रहणमन्तरेण न्यास आस्तामिति चेन्न ? तत्र "अचतुर" इति सूत्रे टिलोपाभावार्थमेवोपशुनमित्यस्य निपातनात् नतु सम्प्र-सारणवाधनार्थात् । न च तथापि "शुनस्सम्प्रसारणं वा च दीर्घत्वम्"इति वार्त्तिके-न शुन्यमित्यत्र सम्प्रसारणविधायकेनैव तथा ज्ञाप्यते इति अतद्धितग्रहणवैयर्थ्यं तदवस्थमेवेति वाच्यम् ? तथापि विनिगमनाविरहेण विपरीतस्यापि 'शुनस्सम्प्र-सारणं चेत्तद्धिते एव' इत्यस्य नियमस्यापत्तौ शुनःशुना इत्यादावपि सम्प्रसारणा-नापत्तेरिति यथास्थितमेव रमणीयम् ।

## पथिमथ्यृभुक्षामादिति—

ननु सूत्रेणानेन ह्रस्वाकार एव विधीयतां "पथिमथ्यृभुक्षामत्"इत्येवास्तु न्यासः,

एतेन नकारस्य ह्रस्वात्वे इकारस्य "इतोऽत्सर्वे" इत्यत्त्वे उभयोरकारयोः "अकः सवर्णे" दीर्घेण पररूपबाधात् पन्था इत्यादिसिद्धेः। नच "अतो गुणे" इति पररूपेण प्रबलेन दीर्घबाधादिष्टासिद्धिरिति वाच्यम्? तथासति "पथिमथ्यृभुक्षां लोपः भस्य टेः इतोऽत्सर्वनामस्थाने" इति न्यासेनैव सिद्धा अकारविधानवैयर्थ्येन तत्सामर्थ्येन पररूपबाधकल्पनात्। **इति चेदत्रोच्यते**—नकारस्थाने जायमानः अकारादेशोऽनुनासिको माभूत् किन्तु शुद्धैव व्यक्तिर्विधीयते इति 'आ आदिति प्रश्लेषेण शुद्धाया एव व्यक्तेर्विधानान्नानुनासिकः' इति कौमुदीरीत्या प्रश्लेषस्यावश्यकत्वेन फलतो दीर्घत्वस्वीकारस्यावश्यकत्वेन दीर्घविधानस्यादप्रदोषानास्पदत्वात्। तथा सति आआदिति आत् इत्यत्र समाससत्त्वेन पदत्वात् पररूपबाधो बोध्यः।

**मनोरमाकारास्तु** क्यजन्तात् क्विपि पन्था इति सिद्धये आद्विधानमिति भणन्ति।

**वस्तुतस्तु** तादृशसामर्थ्याद्याश्रयणगौरवादिक्लेशबाहुल्यात् पाणिनीयमेव सम्यक्।

## भस्य टेर्लोपः—

ननु अत्र "भाड्डित्" इत्येव न्यासोऽस्तु भसंज्ञकात् पथ्यादेः परे प्रत्यया ङितो भवन्तीति तदर्थवर्णनेन च पथः पथे इत्यादिरूपाणां सिद्धेरप्रत्यूहत्वादिति चेदत्र **सिद्धान्तः,** अस्मिन् नव्ये न्यासे परमपथशब्दात् णिचि टिलोपद्वयेन परमयतीति रूपमिष्यते अधुना तदसिद्ध्यापत्तेः। एवम् सुपथिन्शब्दादिष्ठनि प्रत्यये "भस्यटेः" इति लोपे पुनरिष्ठनि "टेः" इति लोपे सुपिष्ठ इति राद्धान्तम् अधुना आभीयत्वेनासिद्धतया पुनष्टिलोपो न स्यादित्यापत्तेश्च दुर्वारत्वात् पाणिनीयन्यासस्यैव मान्यत्वात्।

## अष्टाभ्य औशिति—

ननु अस्य गुरुभूतस्य स्थले "अष्टभ्य उङ्" इत्येवास्तु अष्टन्शब्दाज्जश्शसोरुङि ङित्वात् "ङिच्च" इति सकारस्योङादेशे गुणे अष्ट ओ इति स्थिते "वृद्धिरेचि" इति वृद्धौ अष्टौ इत्यादिसिद्धेः। नच पूर्वोपस्थितनिमित्तकत्वेन अन्तरङ्गत्वात् पूर्वं दीर्घे पश्चाद् गुणे अष्टो इत्यापद्येतेति वाच्यम्? प्रकृतिप्रत्ययोभयवर्णापेक्षकत्वेन दीर्घस्य बहिरङ्गतया प्रत्ययमात्रवर्णापेक्षकत्वेन च गुणस्यान्तरङ्गतया प्राग् गुणे

वृद्धौ रूपसिद्धेर्निर्बाधत्वात् इति चेन्न ? भट्टनये "आतो धातोः" इति सूत्रे धातुग्रहणमाब्निवृत्त्यर्थमिति तन्मते अष्टा ओ इति स्थिते आलोपापत्तेः ।

## वेरपृक्तस्येति—

ननु क्विप् विच् क्विन् इत्यादिप्रत्ययानां स्थाने क्विप् इच् क्विन् इत्यादि प्रपठ्यैव लोपान्तरेण निर्वाहेऽत्र सूत्रे वेर्ग्रहणन्त्याज्यम् । एवमेवानावश्यकत्वादपृक्तग्रहणमपि । नच कण्डूयतेः क्विपि अल्लोपयलोपयोः कण्डूरित्यादौ इष्टो वलि लोप इदानीं वल्परत्वाभावेन न स्यादिति वाच्यम् ? "लोपो व्योः क्विन्चिक्विण्वल्षु" इति न्यासेनैव निर्वाहात् । एवम् "हल्ङ्याब्" सूत्रे हलन्ततदादेः परस्य सुतिस्यादेर्लोप इत्यर्थकरणेन विभर्त्तीत्यादौ वारणसम्भवेन अपृक्तग्रहणन्न कार्यम् । एवम् "अस्ति सिचोऽपृक्ते" इत्यत्रापि "अस्तिसिचः पिति" इति प्रपठ्य हल्रूपस्य ताभ्याम् परस्य पित इडित्यर्थेनादोषात् अपृक्तग्रहणन्तत्रापि हेयम् । किमिति बहुना "अपृक्त एकाल् प्रत्ययः" इति संज्ञाविधायकमपि फलाभावान्न कार्यमिति विशिष्टलाघवादिति चेन्न ? एवंविधानेकक्लिष्टकल्पनापेक्षया पाणिनिकृतस्यैव स्वीकार्यत्वात् ।

## समस्समीति—

ननु अत्र "समो मिङ्" इत्येवास्तु न्यासः "ङ्चि" इत्यन्तादेशेन यणि सम्यङित्यादेः दीर्घे च समीच इत्यादेस्सिद्धौ दोषविरहात् इति चेन्न ? समोऽव्ययत्वेन "अव्ययसर्वनाम्नामकच् प्रक्टेः" इति अकचि तन्मध्यपतितस्तद्ग्रहणेन गृह्यत इति न्यायेन राद्धान्तेऽकज्विशिष्टस्य सम्यादेशे सम्यङिति अधुना मिङि सम्यकङिति फलभेदापत्तेः । **अत्र केचित्**—"उपसर्गस्यायतौ" इति सूत्रभाष्ये अयतौ इत्युपसर्गस्य रेफस्य वा विशेषणमित्याशंक्य "आद्ये परेः प्रतिषेधो वक्तव्यः द्वितीये प्रतेरपूर्वविधिः" इत्युक्तम्भाष्यकृता, तत्र यदि उपसर्गेभ्योऽप्यकच् स्यात्तदा तदापत्तेरपि परिहारो वाच्यो भगवता परन्तु तन्नाम्नोऽपि तत्रोच्चारणासङ्कलनात् उपसर्गेभ्योऽकज् न भवतीति कल्पनयैव तादृश सम्यङ्—सम्यकङितिफलभेदवारणसम्भवात् न्यास ऽदुष्ट इति अभिदधति ।

**वस्तुतस्तु** ज्ञानगौरवात् न्यासो नायं योग्य इति शेखरानुयायिनः ।

## तिरसस्तिर्यलोपे इति—

ननु अत्र "तिरसस्तिर्ये" इत्येवास्तां न्यासः "विष्वग्देवयोः" इतिसूत्रात् अञ्चतौ इत्यनुवर्त्य "यस्मिन् विधिस्तदादावल्ग्रहणे" इति परिभाषया तदादिविधौ अकारादौ अञ्चतौ परे तिर्यादेशे तिरश्चः तिरश्चेत्यादिसिद्धेरिति चेन्न ? क्षेपणार्थकात् असुधातोः क्विबन्तस्य अः इत्यस्योपपदत्वमङ्गीकृत्य अञ्चतेः क्विनि समासे सकारस्य रुत्वे उत्वे गुणे पररूपे ओङ्ङिति तिरिअ.ङ् तिर्योङ्ङित्यत्र अकाराद्यञ्चतिपरत्वाभावात् तिर्यादेशानापत्तेः। नच "तिरसस्तिर्यचि" इति विन्यस्य अजादावञ्चतौ इत्यर्थस्वीकारान्न दोष इति वाच्यम् ? अञ्चतेः क्विप्प्रत्ययान्तस्य अक् इत्यस्य न आसमासे नुटि "विनापि प्रत्ययं पूर्वोत्तरपदयोर्लोपो वा वाच्यः" इति नञः लोपे नक् इति तिरश्शब्दयोगे तस्मिन् परतोऽजादिपरत्वव्याघातात् तिर्यादेशानापत्तेः। यदागमपरिभाषा तु "आने मुक्" इति सूत्रे वर्णग्रहणे सा न प्रवर्त्तत इति पदवीवैशिष्ट्यात् न सहायिका।

**केचित्तु** प्रकृतन्यासे तिरायतीत्यत्र तिर्यादेशो न स्यात् सिद्धान्ते तु टिलोपस्य अकारपर्याप्तस्थानिताकत्वाभावेन "अलोपे" इति निषेधदलाप्रवृत्त्या तत्साधनमिति वदन्ति। तन्न ? अञ्चेष्टिलोपेनापहारेऽपि बहिरङ्गपरिभाषयाऽसिद्धत्वेन तिर्यादेशसिद्धौ बाधकविरहादित्यलम्।

## नाञ्चेः पूजायामिति—

अत्र भाष्यकैयटादयः—ननु "अञ्चेर्गतौ" इत्येवास्तु सूत्रम् अञ्चेर्गतावेव नलोप इति तदर्थात् सकलेष्टसिद्धेरिति चेन्न ? अव्याकुलं गच्छतीत्यर्थे अञ्चितं गच्छति इत्यत्रापि नलोपापत्तेः। राद्धान्ते तु पूजार्थस्य गम्यमानत्वेन नलोपाभावसिद्धिरिति स्पष्टयन्ति। नच अञ्चि पूजायाम् अञ्चु गतौ इति धातुपाठम्प्रपठ्य सकलेष्टसिद्धिः। एवम् पूजार्थे "उदितो वा" इड्विकल्पविधायकस्य इत्यस्याप्रवृत्त्या "यस्य विभाषा" इति निषेधाप्रवृत्त्या इड्विधायक "अञ्चेः पूजायाम्" इति सूत्रमपि न कार्यमिति विशिष्टलाघवसम्भवात् "नाञ्चेः पूजायाम्" इति सूत्रं किमर्थमिति वाच्यम् ? तथा न्यासे पूर्वोक्ते अव्याकुलार्थके अञ्चितं गच्छतीत्यत्र गत्यर्थत्वेन "अनिदिताम्" इति नलोपस्य "यस्य विभाषा" इतीण्निषेधस्य च दुर्वारत्वेन नकारेटोः श्रवणानापत्तेरिति किमधिकेन।

## नमुने इति—

ननु अत्र राद्धान्ते ने इत्यस्यावृत्तिं विधाय नाभावे कर्त्तव्ये कृते च मुभावो नासिद्धः इत्येवमर्थोऽभिधीयते सत्सप्तमीं निमित्तसप्तमीञ्च स्वीकृत्य। ननु अत्र नाभावे कर्त्तव्ये कृत च उभावो नासिद्ध इत्यर्थस्वीकारेण मत्वस्यासिद्धत्वेऽपि दोषाभावात् "नो न" इत्येव न्यासोऽस्तु। इति चेन्न? सम्बोधनविभक्त्यन्त "एचोऽप्रगृह्यस्य" इति व्युत्पन्न पटा३उ इतिच्छान्दसस्यानुकरणे निरुक्तप्रकारेण "नोन" इत्यस्य प्रवृत्त्या उत्वस्यासिद्धत्वाभावेन घित्वे नाभावापत्त्या पटा३उना इत्यनिष्टापत्तेः। एवं भद्रं करोषि पटा३उअरिणा गम्यते इत्यत्रासिद्धकाण्डस्थोत्वस्यासिद्धत्वाभावे "इको यण्" इति यणापत्तेर्दुर्वारत्वात्। नच तथापि "नने" इत्येवास्तु नाभावे कर्त्तव्ये कृते च त्रिपाद्या असिद्धत्वन्नेत तदर्थादिति चेन्न? तथासति पयोरुरुणा इत्यादौ "रो रि" इत्यस्यासिद्धत्वाभावे "हशि च" इत्युत्वम्प्रबाध्य परत्वात् "रो रि" इति लोपे दीर्घे पयारुरुणा इत्यनिष्टापत्तेः। मनस इः मन इस्तेन मन इना इत्यत्र नाभावे कर्त्तव्ये "लोपश्शाकल्यस्य" इत्यादियलोपादीनामसिद्धत्वाभावापत्त्या "आद् गुणः" इति गुणे मनेना इत्याद्यापत्तेश्च।

अपरेतु "नमुटि" इति न्यासः टाविभक्तौ मुत्वन्नासिद्धमिति च तदर्थः। एवञ्च अमुनेत्यादौ न कोऽपि दोष इति ब्रुवते। तन्न? अदश्शब्दात् टाविभक्तौ त्यदाद्यत्वे पररूपे च स्त्रीत्वविवक्षया टापि अदा आ इति दशायां मुत्वस्यासिद्धत्वाभावे परत्वान्मुत्वेऽनिष्टापत्तेः। राद्धान्ते तु मुत्वस्यासिद्धत्वेन तादृशोपस्थितौ "आङि चापः" इत्येत्वेऽयादेशे मुत्वे च अमुयेति सिद्धिस्वीकारादिति।

## जानपदकुण्डगोणेति—

ननु अत्र वर्णग्रहणकालग्रहणे परित्यज्य "वर्णादनुदात्तात्तोपधातोनः" इत्यस्यानन्तरं "कालात्" इति प्रपठ्य पूर्वसूत्रात् कचिदेकदेशोऽप्यनुवर्त्तेत इति सिद्धान्तेन वर्णादित्यनुवर्त्त्य वर्णवाचकात् कालशब्दान्ङीबित्यर्थेन काली इत्यस्य, क्रौर्यादिवैशिष्ट्यार्थप्रतिपादने टापा कालेत्यस्य च सिद्धेः। नच "जानपद" इति सूत्रेण ङीष्प्रत्यये अन्तोदात्तता, तथा नवीनन्यासे ङीपि "सुप्पितौ" इत्यनुदात्तत्वमिति स्वरे विशेष इति वाच्यम्? जातेऽपि ङीपि "अनुदात्तस्य च यत्रोदात्तलोपः" इत्यन्तोदात्तत्वादविशेषात्।

परेतु "जानपद" सूत्रे वर्णग्रहणं कालशब्दात् "पुंयोगादाख्यायाम्" इति प्राप्तङीष्निवृत्त्यर्थम् अन्यथा उक्तसूत्रे "कालात्" इत्यस्य पाठात् वैयर्थ्यध्रौव्यादित्यामनन्ति ।

अपरे तु कालीत्यत्र ङीपः पुंयोगलक्षणस्येष्टतया "जानपद" सूत्रे वर्णग्रहणं "मात्रागौरवात् गौरवम्" इति न्यायज्ञापनार्थमेवेति वदन्ति ।

## इन्द्रवरुणभवेति—

ननु सूत्रेणानेन कथमानुग् विधीयते अनुगेव विधीयतां किमिति दीर्घविधानेन। नच आचक्षाणण्यन्तात् क्विपि निष्पन्नहलन्तेन्द्रशब्दस्यापि "एकदेश विकृत" न्यायेन आनुमानिकस्थानिवद्भावाद् वा इन्द्रशब्दग्रहणेन ग्रहणे ततः आनुकि इन्द्राणी इति राद्धान्तम्। अधुना ऽनुकि इन्द्रणीत्यापत्तिरिति वाच्यम् ? राद्धान्तेऽपि "इन्द्रवरुण" इति सूत्रेऽत इत्यधिकारादनुपसर्जनाधिकाराच्च तत्र सूत्रस्यास्य प्रवृत्तेरनिष्टत्वात् तादृशरूपानभिधानात् । इति चेन्न ? अनुग्विधाने दीर्घम्प्रबाध्य "अतो गुणे" इति पररूपेण इन्द्राणीति लक्ष्यस्यैवासिद्ध्यापत्तेः । नच अनुक् इति अकारोच्चारणसामर्थ्यात् पररूपं बाधितुं शक्यते इति वाच्यम् ? "अल्लोपोऽनः" इति लोपबाधनायाकारोच्चारणस्य चारितार्थ्यात्, पररूपबाधने सामर्थ्यविकलात् । नच लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैव ग्रहणमिति परिभाषयाऽत्र अनो लाक्षणिकत्वेन 'अल्लोपोऽनः" इति सूत्रस्य न प्रवृत्त्यापत्तिरिति वाच्यम् ? ऊधसो नादेशेन सिद्धेऽनङ्करणन्धनुषश्चेत्युत्तरार्थमिति भाष्योक्त्या "अल्लोपोऽन" इति विषये प्रतिपदोक्तपरिभाषाया अप्रवृत्तिस्वीकारात् इति विचिन्त्यताम् ।

## सुपो धातुप्रातिपदिकयोरिति—

ननु धातुप्रातिपदिकेभ्य एव सुपो विधानात्तत्र च तयोः "यस्मात् प्रत्ययविधिः" इत्यङ्गत्वसिद्धान्तेन "सुपोऽङ्गस्य" इति न्यासेनैव अङ्गावयवस्य सुपो लुक् इत्यर्थकेन सिद्धौ किं गुरुभूतेनानेन पाणिनीयेन । नच राजन्ङस् पुरुष सु इत्यवस्थायां विशिष्टस्य "कृत्तद्धितसमासाश्च" इति प्रातिपदिकत्वे तद्घटकविभक्तेरङ्गावयवत्वाभावात् कथं सूत्रप्रवृत्तिरिति वाच्यम् ? समुदायप्रकृतिकविभक्तौ समासनिष्पन्नविभक्तिविशिष्टस्याङ्गत्वेन लुकःप्रवृत्तेरनिवार्यत्वात् । एवमेव च धनीयतीत्यादौ द्वितीयान्ताद् धनशब्दात् "सुप आत्मनः क्यच्" इति क्यचि तन्निरूपिताङ्गत्वस्य द्वितीयान्ते सत्त्वेनादोषप्रतिपादनात् ।

नच तथा सति विरलसर्वे विरलसर्वस्मै इत्यादौ विरल सु सर्व सु इत्यवस्थायां विशिष्टाद् विहितजसादेः सर्वनाम्नोऽविहितत्वात् शीस्मैप्रभृतय आदेशाः कथमिति वाच्यम् ? सामासिकविभक्तिलुकि जसादेः समुदायादानीतस्य सर्वनाम्नः परत्वेन "जसः शी" इत्यादौ सर्वनाम्नः परत्वमात्रस्य विभक्तौ विवक्षणेन च दोषविरहोपपादनात्। नचैवं सति वर्णाश्रमेतरशब्दे समुदायस्य "द्वन्द्वे च" इति सर्वनामतानिषेधेऽपि तद्घटकेतरशब्दस्य निषेधाभावात् सर्वनामत्वानपायात् समुदायादुत्पन्नायामपि विभक्तौ सर्वनाम्नः ( अवयवात् इतरशब्दात् ) परत्वस्याक्षततया शीस्मैप्रभृत्यादेशापत्तिरिति वाच्यम् ? सर्वनामसंज्ञाप्रतिषेधके "द्वन्द्वे च" सप्तम्या घटकत्वमर्थः, एवञ्च द्वन्द्वघटकस्सर्वनामसंज्ञको न भवतीति तदर्थेन अवयवस्य इतरादेर्द्वन्द्वघटकतया, समुदायस्य च व्यपदेशिवद्भावेन स्वघटकत्वेन उभयोरपि सर्वनामत्वप्रतिषेधे निरुक्तापत्तेस्सर्वथैव परिहारात्।

नच विहितविशेषणत्वांशपरित्यागे वासुदेवार्थेन अशब्देन इतरशब्दस्य समासे "कृत्तद्धित" इति विशिष्टस्य प्रातिपदिकत्वे "अन्तरङ्गानपि विधीन् बहिरङ्गो लुग् बाधते" इति न्यायेन सुपो लुकि पूर्वोपस्थितनिमित्तकत्वरूपान्तरङ्गत्वमादाय सुबुत्पत्तौ पश्चात् दीर्घे राद्धान्ते समुदायप्रकृतिकविभक्तेः सर्वनाम्नो विहितत्वाभावेन स्यादय आदेशा न विभक्तीनाम्। साम्प्रतं दीर्घोत्तरं पूर्वान्तवद्भावेन सर्वनाम्नः परत्वात् शीप्रभृतयआदेशा आपद्यन्ते इति वाच्यम् ? पञ्चमीसमासक "अचः परस्मिन् पूर्वविधौ" इति स्थानिवत्त्वेन अधुनाऽपि तत्परत्वाभावसम्पादनात्। अत एव हे सर्वाय नम इत्यादौ नास्मन्मते दोषलेशः।

**अत्रकेचित्** वस्तुतः शेखरादिरीत्याऽकच्प्रत्ययार्थं अवयवस्य सर्वनामत्वानिषेधसिद्धान्त इति, तथा च वर्णाश्रमेतरशब्दे दत्तो दोषो दुरुद्धर इति व्याचक्षते, तन्न ? इतरव्यावर्त्तकत्वादिविशेषणलक्षणस्य विशेष्यवृत्तितया विशेष्यविशेषणभावे कामचारात् अदन्तसर्वनामरूपाङ्गात् परेषां जसादीनां स्यादय इत्याद्यर्थं स्वीकृत्य दोषस्य सुवारत्वात्।

नच परम औ हरिऔ इति स्थितौ समासे भ्याम्विभक्तौ पूर्वस्य अङ्गत्वे सुपो लुकि भ्यांसत्ताधीनाऽङ्गसंज्ञा तदधीनो विभक्तिलोपः इति अविभक्तेर्लोपस्य भ्याम्निमित्तकतया "अचः परस्मिन्" इति स्थानिवत्त्वेन तस्मिन् परे हरेरिकारस्य यणापत्तिः, राद्धान्ते तु प्रातिपदिकसंज्ञायाम् भ्यामोऽपेक्षाविरहात् विभक्तिलुकः

परनिमित्तकत्वाभावेन स्थानिवद्भावाभावसम्पादनात् इति वाच्यम् ? स्थानिवद्भावविधायके निमित्तपदेन सप्तम्यन्तस्य ग्रहणात् अङ्गावयवस्य लोपेऽङ्गस्यातथात्वेन- परमश्चासौ हरिः परमहरिः ततः एकशेषे ताभ्याम् परमहरिभ्यामिति प्रकारेण च दोषाभावस्योपपादनात् ।

**अन्ये तु** "ओतो णित्" इत्यत्र "विहितविशेषणान्नेह हे भानो हेभानवः" इति ग्रन्थानुसारम् विहितविशेषणत्वस्यावश्यकतया शोभनश्चासौ गौरिति विग्रहे समासे सुगौः विभक्तिविशिष्टस्य प्रातिपदिकतया समुदायोत्पन्नविभक्तावङ्गत्वेन सुब्लुकि सर्वनामस्थानस्य ओकारान्ताद् विहितत्वाभावेन णित्वानापत्तेः, राद्धान्ते तु विभक्तिलोपात् पश्चाद् विभक्तेस्तद्विहितत्वेन न दोष इति वाच्यम् ? प्रतिपदोक्तपरिभाषाया वर्णग्रहणेऽपि प्रवृत्तिरिति 'ओत्" सूत्रभाष्यनिश्चयेन तयैव हेभानो इत्यादौ णिद्वत्ववारणसम्भवात् ओकारान्तात् परो णिदित्यर्थेन वाऽदोषात् विहितविशेषणत्वास्वीकारात् । एवमेव स्मृतौ चित्रगोः इत्यादावपि णित्ववारणम् । एवं सर्वनाम्नः परा या सप्तमी तदन्तात् त्रलित्येवम् "सप्तम्यास्त्रल्" इत्यस्यार्थेन परमसर्वत्रेत्यादेःसिद्धिः ।

**अत्र शुक्लाः** कच्छपी इत्यत्र प्राक् सुबुत्पत्तेस्समासे ङीष् इष्यते इदानीमङ्गत्वसम्पत्तये सुप आवश्यकतया स्वार्थद्रव्यलिङ्गसंख्याकारकाणां क्रमिकतया पूर्वं लिङ्गविवक्षायां टापि कच्छपी इत्यस्यासिद्ध्यापत्तेरित्यलम् ।

## शक्तियष्ट्योरीकक् इति—

ननु अत्र "शक्तियष्ट्योरिकक्" इत्येवास्तु ह्रस्वात्मको न्यासः, "नञ्स्नञीकक्ख्युँस्तरुणतलुनानामुपसंख्यानम्" इत्यत्र च इकक् इत्येवास्तु । तावतैव सवर्णदीर्घेण रूपसम्पादनात् । उच्चारणसामर्थ्याच्च "यस्येतिच" इति लोपस्यापि पराहतत्वादितिचेन्न ? कर्कशब्दात् "कर्कलोहितादीकक्" इतीककि "यस्येति च" इति लोपे "नञ्स्नञ्" इतिवार्त्तिकेन ङीपि कार्कीकी इति सिद्धान्ते सिध्यति, अधुना ह्रस्वविधाने "यस्येति च" इति लोपे तत्रेकारश्रवणाभावप्रसङ्गात् । तदर्थम् वार्तिके ङीब्विधायके दीर्घपाठे "शक्ति" इतिसूत्रे च ह्रस्वस्यैवाग्रहे शाक्तीकी इत्यादौ ङीपोऽप्रवृत्तिप्रसङ्गात् ।

**अत्र केचित्**-ईकग्विधायकेषु सर्वत्र टीकगितिन्यासात् टीकक्प्रत्यये टित्वादेव ङीपस्सिद्धेः "नञ् स्नञ्" इति वार्त्तिके ईकग्ग्रहणाकरणेन विशिष्टलाघवमिति

"शक्तियष्टयोष्टीकक्" इत्यादि योग्यमेवेति समामनन्ति । परमेषां ज्ञानगौरवसम्पादकतया पाणिनीयन्यास एव श्रेयान् विभातीत्यलम् ।

## सार्वधातुकार्धधातुकयोरिति—

ननु पिति आर्धधातुके च परे इगन्ताङ्गस्य गुणो भवति इत्यर्थक "पिदार्धधातुकयोः" इति न्यासेनैव भवति भवितेत्यादिसिद्धौ किम् पाणिनीयगौरवेणेति । नच तथा सति सप्तमीबहुवचनसुपोऽपि पित्त्वेन हरिषु इत्यादावपि गुणापत्तिः ? आर्धधातुकसाहचर्येण पितोऽपि धातुविहितस्यैव ग्रहणेनादोषात् । नच लुनातीतिलूः पुनाति इति पूः भवतीति भुः तेषु लूषु पूषु भूषु इत्यादौ धातुविहितपितस्सत्त्वेन गुणापत्तितादवस्थ्यमिति वाच्यम् ? आर्धधातुकसाहचर्येण धातुत्वावच्छिन्नोद्देश्यतानिरूपितविधेयताश्रयस्यैव पितो ग्रहणात् । प्रकृतेषु च लू पू भू इत्याकारककर्तृक्विबन्तप्रातिपदिकमुद्दिश्य सुपो जातत्वेन प्रातिपदिकत्वावच्छिन्नोद्देश्यतानिरूपितविधेयताश्रयत्वं सुपो नतु धातुत्वावच्छिन्नोद्देश्यतानिरूपितविधेयताश्रयत्वमितिव्याख्यानाद् विदोषात् ।

नचैवम् नवीनन्यासे रुतः युतः इत्यादौ पिद्भिन्ने गुणाप्राप्त्या तत्र गुणनिषेधाय "सार्वधातुकमपित्" इति अपित्वं द्वारीकृत्य गुणनिषेधो व्यर्थ इति वाच्यम् ? गुणप्रतिषेधाय अनावश्यकस्यापि ङित्त्वविधायकस्य उष्ट इत्यादौ सम्प्रसारणसिद्धये मृष्ट इत्यादावबृद्धिसिद्धये च चारितार्थ्यसम्भवात् । **इति चेदत्रोच्यते**–एतेन सार्वधातुकग्रहणेन भवदुक्तप्रकारैर्व्यर्थीभूतेन साहचर्यपरिभाषाया अनित्यत्वज्ञापनात् । अत एव "सिजभ्यस्तविदिभ्यश्च" इति सूत्रे विदादिसाहचर्यात् सिचोऽपि धातोर्न ग्रहणं किन्तु 'प्रकृतिप्रत्यययोर्मध्ये पतति यस्स विकरणः' इति लक्षणलक्षितस्यैवेति व्याख्यानात् ।

**अत्र केचित्** "धातोः" इत्येव सूत्रमस्तु "अङ्गस्य" इत्यधिकारः इक्परिभाषोपस्थितिः "धातोरुच्यमानं कार्यन्तत्प्रत्यये भवति" इति परिभाषया इगन्तस्य धातोर्गुणो भवति तत्प्रत्यये इत्याद्यर्थलब्ध्या अर्थादेव सार्वधातुकार्धधातुकयोर्लाभे सिद्धे दोषवैकल्यात् किमर्थमयत्र लघुप्रयास आदृतः । न च तथा न्यासे "तनादिकृञ्भ्य उः" इत्यादिविहितानामुकारादीनां धात्वनवयवत्वात् कथं स्याद् गुणादेश इति वाच्यम् ? तथाविधेषु "तनादिकृञ्भ्य उक्" इत्यादिन्यासेन 'यदागमास्तद्गुणीभूतास्तद्ग्रहणेन गृह्यन्ते' इति परिभाषया उक् इत्यादीनान्धात्ववयवत्वे बाधकविरहात् ।

नच तथा कृञ उक्तो विधाने उकः कित्त्वेन "क्ङिति च" इति गुणनिषेधापत्तिरिति वाच्यम् ? "अत उत्सार्वधातुके" इति सूत्रेण कृञोऽकारस्योत्वविधानसामर्थ्याद् गुणनिषेधकस्येहाप्रवृत्तेः। अत एव "नित्यं करोतेः" इत्यादयो निर्देशा अपि सङ्गच्छन्ते। एवञ्च "धातोः" इति न्यासस्सुवच एवेति चेन्न ? धातुत्वेतरो धातुत्वव्याप्यो योधर्मस्तदवच्छिन्नोद्देश्यताककार्ये एव धातोः कार्यमुच्यमानम् इति परिभाषायाः प्रवृत्तिस्वीकारात् प्रकृते तदप्रवृत्तेः। अत एव "नभूसुधियोः" इत्यादयः निर्देशा अप्युपपद्यन्ते। अन्यथा "अचि श्नुधातु" इति सूत्रेऽपि तत्प्रवृत्त्या धातुविहितप्रत्यये एव धातुपदबोध्येयङादेशप्रवृत्तिकल्पनापत्तो भूसुधीशब्दात् ओसि विभक्तौ (सुपि) इयङादेशानापत्तेरित्यलम्।

## अतो दीर्घो यञि इति—

नच अत्र "पावा" इत्येव न्यासः 'पौआ' इति पदद्वयम्। आ इत्यत्र च अ इति लुप्तषष्ठ्यन्तस्य प्रश्लेषात् तस्य अङ्गविशेषणतया तदन्तत्वे अदन्तस्याङ्गस्य आकारस्स्यात् पवर्गे परे इति तदर्थः। एवं च भवामि भविष्यामि रामाभ्याम् इत्यादेः सिद्धिसम्भवात्। अत्र पक्षे निष्फलत्वात् "सुपिच" इति सूत्रमपि न कार्य्यम्भवतीति विशिष्टलाघवात्। नच रामायेत्यत्र पवर्गादिप्रत्ययपरत्वाभावेन दीर्घो न स्यादिति तत्सिद्ध्यै "सुपि च" इति पृथग् दीर्घविधानमावश्यकमिति वाच्यम् ? तत्र दीर्घो नैवं रीत्या, किन्तु "ङेर्यः" इत्यत्र "ङेरयङ्" इति न्यासस्तथा च ङेप्रत्ययस्यायादेशे अकारविशिष्टादेशविधानसामर्थ्यात् "अतो गुणे" इति पररूपम्प्रबाध्य सवर्णदीर्घेणैवेष्टसिद्धेः "सुपि च" इत्यस्यानावश्यकत्वात्। **इति चेदत्रोच्यते** सुष्ठुपादौ यस्य स सुपात् सच अश्चेति समाहारे सुपादशब्दान्ङेविभक्तौ ङेरयङादेशेऽयादेशस्य अजादित्वेन दीर्घोत्तरमपि "पादः पत्" इति पदादेशापत्तेः। नच अचः परस्मिन्" स्थानिवत्त्वेनापत्त्यभावः ? "नपदान्त" सूत्रेण तन्निषेधात्। एवञ्च "ङेरयङ्" इति न्यासस्य दूष्यत्वेन रामायेत्यादौ दोषतादवस्थ्यात्, "बहुवचने" इत्यादावुत्तरार्थत्वाच्च "सुपि च" इत्यस्यावश्यं कर्त्तव्यतया लाघवविरहात्, यञ्दीर्घयोरपि संज्ञाशब्दत्वेन संज्ञाशब्दानामर्द्धमात्रिकत्वनियमेन तदकरणेऽपि लाघवस्य विशेषतो वक्तुमशक्यत्वात्, सारसायनभक्तः पण्डितपाशः इत्यादौ दीर्घापत्त्या भवावो भविष्याव इत्यादौ तदनापत्त्या च "पावा" इति न्यासस्य दुष्टत्वात्।

**अत्र केचिद्**—ननु "अङ्गार्ग्यगालवयोः" इत्यस्यानन्तरं "अतो यञि" इत्ये-

वास्तु न्यासः तत एव पूर्वसूत्रादटोऽनुवृत्त्या ऽकारोच्चारणसामर्थ्येन पररूपबाधे दीर्घेण भवामि भवाव इत्यादिलक्ष्यसिद्धौ दीर्घग्रहणं किमर्थम् इति चेन्न ? तथा सति राद्धान्ते दीर्घपदानुवृत्तिरिव साम्प्रतम् अट्पदानुवृत्त्या "सुपि च" इत्यनेनाड्विधाने आभ्याम् इत्यादौ यदागमन्यायेन भ्यामादेरडागमेऽपि तद्ग्रहणेन ग्रहणात् अजादित्वेन "हलि लोपः" इत्यादीनामप्रवृत्त्यापत्तेः "अनाप्यकः" इत्यनादेशापत्तेश्च । तत्र "अनटौसोरकः" आपि लोपः" इति विन्यस्य निर्वाहसम्भवेऽपि अधुक्षावहि इत्यत्र वहिप्रत्ययस्याडागमे तस्याजादित्वेन क्सस्य लोपापत्तेर्दुर्वारत्वात् दीर्घग्रहणस्यावश्यकत्वमिति शास्त्रार्थप्रकारन्दर्शयन्ति ।

अपरे तु अत्र "अत आद् यञि" इत्येव सूत्रमस्तु तथैव सर्वेष्टसिद्धिसम्भवाद् दीर्घग्रहणन्दीर्घो दीर्घ एव यथा स्यात् इति ज्ञापनार्थम् । अत एव पचामि भोः इत्यत्र "अनन्त्यस्यापि प्रश्नाख्यानयोः" इति प्लुतो न भवति । अन्यथा वाक्यस्यस्यानन्त्यस्य पदस्याचः प्लुतः अन्त्यस्य पदस्य च टेः इति तदर्थात् पचामीत्यादौ तत्प्राप्त्या प्लुतस्य दुर्वारत्वापत्तेः । नच आद् इत्यत्र आ आद् इति आकारमपरमपि प्रश्लिष्य प्लुतव्यावृत्तिः कर्त्तुं शक्येति वाच्यम् ? क्लिष्टकल्पनापत्तेः । न च "ज्ञाजनोर्जा" इत्यत्रत्यदीर्घविधानग्रहणज्ञापित "अङ्गवृत्त" परिभाषाज्ञापनपरभाष्यासङ्गतिवारणाय पचामीत्यादौ प्लुतो न भवतीति कल्पनयैव सिद्धौ दीर्घग्रहणं व्यर्थमेवेति वाच्यम् ? तितउशब्दाण्णिचि क्विपि भ्यामि तिताभ्यामित्यत्र राद्धान्ते सूत्रे दीर्घग्रहणसत्त्वेन न "पदान्त" इति दीर्घविधौ स्थानिवत्त्वनिषेधात् दीर्घस्सिध्यति । साम्प्रतकालन्तु नात्र दीर्घविधिः किन्तु आत्वविधिरिति स्थानिवत्त्वानिषेधात् दीर्घानापत्तेरिति "पावा" इति न्यासोऽपि दुष्टः "सुपि च" इति सूत्रमपि कार्यम् "अतो दीर्घ" इत्यत्रापि यथापाणिनीयमेव रम्यमिति समामनन्ति ।

## आर्धधातुकस्येड् वलादेरिति—

ननु अत्र "इड्वलादेः" इत्येवास्तु न्यासः "ऋत इद्धातोः" इति सूत्राद् धातोः इत्यनुवर्त्त्य धातोः परस्य वलादेरिडागम इत्यर्थेन सर्वेष्टसिद्धेरतिप्रसङ्गानवकाशाच्च आर्धधातुकस्येति किमर्थम् । नच तथा सति जुगुप्सते इत्यत्र सनोऽपीडागमापत्तिः राद्धान्ते तु धातुशब्दमुच्चार्य सनो विहितत्वाभावेन नेडागम इति वाच्यम् ? अधुनापि विहितविशेषणत्वमङ्गीकृत्य धातुत्वावच्छिन्नोद्देश्यतानिरूपितविधेयताशालिवलादेरिडागम इत्यर्थस्य स्वीकर्तव्यत्वात् ।

नच तथा सति भवतीत्यत्रापि तिप इडागमापत्तिः धातुत्वावच्छिन्नोद्देश्यता-निरूपितविधेयताश्रयवलादेस्तिपस्सत्त्वात् इति वाच्यम् ? तथा सति रोदिति इत्या-दावपि इडागमसिद्ध्या तदर्थमारभ्यमाणं "रुदादिभ्यस्सार्वधातुके" इति सूत्रं व्यर्थी-भूय सार्वधातुकस्येडागमश्चेत्तर्हि रुधादिभ्यः परस्यैवेति नियमयतीति तत्त्वबोधिनी-कारोक्तदिशा निर्वाहसम्भवात् । नच रुधादिभ्यः परस्य वलादेरिट् चेत् तर्हि सार्व-धातुक एवेति विपरीतनियमापत्त्या लडादौ अव्याप्तिरसम्भवतीति वाच्यम् ? तथा विपरीतनियमे सति "रुदविदमुषग्रहिस्वपिप्रच्छः संश्च" इति सूत्रेण सेट्कयोः क्त्वासनोः कित्त्वविधानसामर्थ्यात् तादृशविपरीतनियमस्य वारणसम्भवात् । अ-न्यथा सार्वधातुकभिन्नतया रुदादिभ्यस्सनः क्त्वश्च इडभावात् सेटोः क्त्वासनोरला-भेन कित्त्वविधानस्य वैयर्थ्यात् । एवञ्च नार्धधातुकग्रहणस्य किञ्चित् फलम् ।

**भैरवीकारास्तु**-योगविभागार्थमार्द्धधातुकग्रहणं चरितार्थम्। तथाहि "आर्ध-धातुकस्येट्" इति "वलादेः" इति योगद्वयम् । तत्र पूर्वयोगो नियमार्थः यावानिट् भवति स आर्धधातुकस्यैव नतु तन्निमित्ताङ्गस्य । अत एव "स्यसिच्सीयुट्" इति सूत्रेण विधीयमान इडागमो नाङ्गस्येति वक्तुम्प्रभवन्ति ।

## पुगन्तलघूपधस्य चेति—

ननु अत्र सूत्रे लघुग्रहणाभावेऽपि पुगन्तग्रहणसामर्थ्यात् दीर्घोपधस्य चेद्गु-णादेशस्तर्हि पुगन्तस्यैवेति नियमेन ऊइते इत्यादौ गुणापत्तिवारणसम्भवाद् लघुग्रह-णसहित एव न्यासोऽस्तु । रुदित्वेत्यादौ एतेन राद्धान्ते प्राप्तगुणनिषेधार्थं "रुदवि-दिग्रहि" इति कित्त्वविधानेन लघूपधस्य चेत्तर्हि पुगन्तस्यैवेति न नियमाकारः । अन्यथा रुदित्वेत्यादौ पुगन्तत्वविरहेण गुणाप्रवृत्त्या तन्निषेधार्थं कित्त्वविधानस्य वैयर्थ्यापत्तेः ।

**अत्र केचित्** वैयर्थ्यसम्पादकशास्त्रीयोद्देश्यतावच्छेदकव्याप्यं यद्व्यर्थीभूतशा-स्त्रीयोद्देश्यतावच्छेदकव्यापकञ्च रूपन्तादृशरूपावच्छिन्नातिरिक्तत्वेन वैयर्थ्यसम्पाद-कशास्त्रीयोद्देश्यतावच्छेदकावच्छिन्ने सङ्कोचो जायते इति नियमाकारस्य "अर्थव-दधातुः" कृत्तद्धितसमा "इत्यादौ क्लृप्ततया प्रकृतसूत्रे "पुगन्त" इत्यत्र तादृशस-ङ्कोचाकाराप्रवृत्त्या नियमत्वासम्भवेन सार्वधातुकार्द्धधातुकाव्यवहितपूर्वत्वविशिष्टे-त्वस्यैव च तथा सम्भवात् चयनार्थचिधातोः क्विपितुकि आचारक्विबन्ताल्लटि श-पि चेतति इत्यादौ गुणानापत्तेः पूर्वोक्तपाणिनीयन्यासस्यैवोचितत्वादिति ।

## रिचेति—

ननु "लुटः प्रथमस्य डारौरसः" इति सूत्रस्य कप्प्रत्ययावधेः प्रागेव पाठात् रौरसोः "स्वादिष्वसर्वनामस्थाने "इति पदत्वे तासस्सस्य रुत्वे ''रोरि'' इति लोपे च भवितारौ भवितार इत्यादिसिद्धेः "रिच" इतीदं सूत्रङ्किमर्थमिति **चेद्-त्रोच्यते**–पक्तारो भवितार इति यत्र स व्यापार इति विग्रहे "मयूरकंसकादयश्च" इतिसमासे आचक्षाणणिजन्ताल्लुङि च्लेश्चङि द्वित्वे "रोरि" इतिलोपस्यासिद्धत्वेन उपधाह्रस्वानापत्तेरिति दिक्। अपरे तु तत्र नेष्यत एव उपधाह्रस्व इति दूषणम्मृग्य-मत्रेति वदन्ति ।

## लोट् चेति—

ननु अत्र "ङ्लोट्" इति न्यासं कृत्वा लोटो ङित्वे सिद्धे तदर्थम् "लोटो लङ्-वत्" इति सूत्रन्न विधेयम् । यत्र २ लोटः पाठस्तत्र २ सर्वत्र ङ्लोट एव पाठो-ऽस्तु । एवञ्च यान्तु वान्तु इत्यादौ न "लङः शाकटायनस्य" इति झेर्जुसापत्ति-रिति । एवमेव "एरुः" इत्यादौ यत्र लोटोऽनुवृत्तिः प्राप्स्यते तत्र २ "लोट-एरुः" इत्यादिपाठात् । नच तथा सति जुह्वतु इत्यादौ "सिजभ्यस्तविदिभ्यश्च" इति झेर्जुस् दुर्वारा इति वाच्यम् ? पक्षद्वयेऽपि तुल्यत्वात् । शानजादिशित्वज्ञाप-नेन कौमुदीरीत्याऽनुबन्धकार्ये कर्त्तव्ये क्वचिदनल्विधाविति निषेधः प्रवर्त्तेत इति ज्ञापनेन निषेधप्रवृत्त्या स्थानिवत्त्वप्रयुक्तङित्त्वानतिदेशात् । एवम् "न ल्यपि" इति सामर्थ्येन तद्ज्ञापनस्य क्वाचित्कत्वस्वीकारात् तामादिषु ङित्वानयने बाधाभावात् । एवमेव "सेर्ह्यपिच्च" इत्यत्रापि "लोटःसेर्ह्यपिच्च" इति प्रपठ्य न लोटोऽनुवृत्तिराव-श्यकी । एवञ्च "क्रियासमभिहारे ङ्लोट्" इत्यादि न्यासैरेवोपपत्तौ" लोटो लङ्-वत्" इति सूत्रम्पृथग्योगारम्भश्च नैव विधेय इति विशिष्टलाघवात् ।

**अपरे तु** ङ्लोडित्येव सिद्धे लङ्वद्भावातिदेशः "आतिदेशिकमनित्यम्" इति परिभाषां ज्ञापयन् जुह्वतु यान्तु इत्यादौ जुसभावार्थ इति विवदन्ते ।

## सेर्ह्यपिच्चेति—

ननु अत्र सूत्रेऽपिद्ग्रहणम्परित्यज्य "सेर्हिङ्" इति विन्यस्य तातङादिषु "ङिच्च" इत्यनेन प्राप्तस्याप्यन्तादेशस्य सर्वादेशेन बाधवदिहापि सर्वादेशेन सर्वे-ष्टसिद्धेरिति चेन्न ? सेः स्थाने जायमानस्य आदेशस्य राद्धान्ते "अनुदात्तौ सुप्पितौ"

इत्यनुदात्तत्वन्न भवति, सम्प्रति स्थानिवत्त्वेन पित्त्वमादाय तदापत्तेर्दुर्वारत्वापत्तेः।

यदितु ब्रूतात् इत्यत्रेड्वारणाय "सार्वधातुकमपित्" इत्यत्र अपिदिति योगं विभज्यावर्त्त्य नञं व्यत्यस्य ङित् पित् न,पिच्चङित्नेति ज्ञापनात् ह्विडादेशे आतिदेशिकपित्त्वस्य आनयनासम्भव इत्युच्यते तदा तु योग्य एव नवीनो न्यासः।

**अपरे** तु "वाच्छन्दसि" इत्युत्तरार्थमपिद्ग्रहणम्। तेन युयोधीति सिध्यति। अन्यथा ह्विङ एव विकल्पापत्त्या तदसिद्धेरित्याहुः।

## आडुत्तमस्य पिच्चेति—

ननु अत्र "अगुत्तमे" इत्येवास्तु न्यासः लोडुत्तमे परेऽगागम इति च तदर्थः। एवञ्च भवानीत्यादौ सवर्णदीर्घेण अदानि इत्यादौ च अगागमे "अतो दीर्घो यञि" इति दीर्घेण सिद्धौ किमर्थमाट्करणम्पित्करणञ्चेति। न च पित्त्वाभावे "अनुदात्तौ सुप्पितौ" इतीष्टमप्यनुदात्तत्वं व्याहन्येतेति वाच्यम्? तथा सत्यपि "आगमा अनुदात्ताः" इत्यनुदात्तत्वस्य अगागमेऽपि सिद्धेः। **इति चेदत्रोच्यते**–तथा सति अगागमस्य यदागमन्यायेन अङ्गावयवत्वेन लघूपधत्वाभावाद् देहानि इत्यादौ गुणानापत्तेः। ऊर्णवाव करवाम इत्यादौ वस्मसोरपित्त्वेन "सार्वधातुकमपित्" इति ङित्त्वात् गुणनिषेधापत्तेश्च। नच तदर्थम् धातोर्विकरणोऽट् प्रत्यय उत्तमे परे इत्यर्थकः "अडुत्तमे" इत्येवास्तु न्यासः अटि "अतो दीर्घ" इति वाच्यम्? तथा सति देहानि इत्यादिसिद्धावपि प्रभवानीत्यत्र णत्वापत्तेः। तत्र हि राद्धान्ते "आगमजमनित्यम्, सागरन्तर्तुकामस्य इति भाष्यात्" इति रीत्याऽऽटोऽभावेन आनीत्यस्यालाभात् "आनि लोट्" इतिणत्वञ्च भवति, साम्प्रतकालन्तु अटोऽत्रागमत्वाभावेन तत्त्वाप्रवृत्त्या णत्वापत्तेर्युक्तत्वात्।

**विशिष्टदर्शनास्तु** राद्धान्ते "आनि लोट्"इत्यत्र निलोडित्येव वक्तव्ये आकारोच्चारणसामर्थ्येन "आगमजमनित्यम्"इति परिभाषा ज्ञाप्यते। इदानीं नेरेवार्थवत्त्वेन "अनिलोट्"इत्यत्र निलोडितिवक्तव्ये ज्ञापकत्वमनुपपन्नं स्यादिति दर्शयन्ति।

**शुक्लास्तु**–इदानीम् "अनिलोट्" इत्येवास्तु सूत्रम् तत्र "निलोट्" इत्येव वक्तव्ये अनिलोट्करणेन विकरणमनित्यमित्यस्य ज्ञापनेनाटोऽभावे प्रभवानीत्यस्य सिद्धौ न बाधकम्पश्यामः। सा "आगमजमनित्यम्"इति तु परिभाषा भाष्यानुक्तत्वान्नैवादर्त्तव्या। प्रभवानीत्यस्य वा लक्ष्यत्वे विशिष्टगमकाभावेन "अडुत्तमे" इति न्यासस्सुवच एवेति वदन्ति।

## इतश्चेति—

ननु "नित्यं ङितः" इति सूत्रे "इतश्चलोपः परस्मैपदेषु" इत्यतः परस्मैपदेषु इति सम्बध्यते । नित्यपदसत्त्वाच्च तद्विरोधिनो वापदस्य "वैतोऽन्यत्र" इत्यस्माच्चानुवृत्तिः । एवमेव "स उत्तमस्य" इत्यत उत्तमस्येति च नानुवर्त्तते । एवञ्च ङितः परस्मैपदानां नित्यं लोप इति तदर्थेन "अलोऽन्त्यस्य" इति परिभाषया सकारेकारयोरुभयोरप्येतेनैव लोपसिद्धौ "इतश्च" इति सूत्रमव्यर्थम् ।

नच तसादौ अपि लोपापत्तिः ? तक्रकौण्डिन्यन्यायेन "तस्थस्थमिपाम्" इति "नित्यं ङित" इत्यस्य बाधाददोषात् इति न्यासरत्नावलीकाराः ।

## यासुट् परस्मैपदेषु—

ननु अत्र "श्यास् परस्मैपदेषु" इत्येवास्तु न्यासः श्यासश्शित्त्वेन "तिङ् शित्" इति सार्वधातुकत्वे "सार्वधातुकमपित्" इति ङित्त्वलाभे प्रत्ययस्वरेण चोदात्तत्वे सिद्धे उदात्तग्रहणं ङिद्ग्रहणञ्च मास्तु इति ।

नच अत्र सूत्रे लिङा धातोराक्षेपेण शपि कृते श्यासो निरवकाशत्वेन "सत्यपि सम्भवे बाधनम्" इति न्यायेन शपम्प्रबाध्य श्यासि कर्त्रर्थकसार्वधातुकपरत्वाभावेन शब् नैव स्यादिति कथम्भवेदित्यस्य सिद्धिरिति वाच्यम् ? आशिषि श्यासोऽपि सावकाशत्वेन शपो बाधे सामर्थ्यवैकल्यात् "भवेतरः" इत्यादिनिर्देशेन क्वचित् कर्त्रर्थकसार्वधातुकपरत्वालाभेऽपि शब् भवतीति ज्ञापनाददोषाद् वा । नच तथासति श्यासस्सार्वधातुकत्वेन भूयादित्यादावपि शबापत्तिः ? "किदाशिषि" इत्यस्यानन्तरम् "लिङ्याशिष्यार्धधातुकम्" इति विन्यस्य आशिषि लिङि परे श्यास् आर्धधातुकसंज्ञको भवतीति च तदर्थवर्णनेन भूयादित्यादौ शपोऽप्रवृत्तेः । एवमेव जागर्यादित्यत्रापि विशेषविहितेन कित्त्वेन आतिदेशिकस्य "सार्वधातुकमपित्" इति ङित्त्वस्य बाधात् ङिद्भिन्नप्रतिषेधविषयसत्त्वाद् गुणसिद्धिरिति चेन्न ? अनेकत्रानेकक्लिष्टकल्पनाभयादेव पाणिनीयन्यासस्य मान्यत्वात् ।

नच "लाघवात् "श्यासुट् परस्मैपदेषूदात्त" इत्येवास्तु पार्थक्येन ङिच्चेति ग्रहणङ्किमर्थम् इति वाच्यम ? तथात्वे "किदाशिषि" इति कित्त्वस्य इज्यात् इत्यादौ सम्प्रसारणविधानेन चरितार्थत्वात् औपदेशिकङित्त्वस्य आतिदेशिककित्त्वेन बाधासम्भवात् जागर्यादित्यादौ ङिद्भिन्नप्रतिषेधविषयपरत्वाभावेन "जाग्रोऽविचिण्"

इति सूत्रेण गुणानापत्तेः। राद्धान्ते तु आतिदेशिकेन विशेषविहितेन कित्त्वेन आतिदेशिकस्य ङित्त्वस्य बाधे क्षतिवैकल्यात् सिद्धेः। नच तथापि "क्यासुट् परस्मैपदेषूदात्तो ङिच्च" इति विन्यस्य निर्वाहसम्भवे इज्यादित्यादौ सम्प्रसारणनिष्पत्तौ च "किदाशिषि" इति व्यर्थमिति वाच्यम्? तथा सति अविशेषात् विधिलिङि वच्यात् जागृयात् इत्यादौ क्रमशः सम्प्रसारणस्य गुणस्य चापत्तेरपरिहार्यत्वादिति यथास्थितमेव रमणीयम्।

## इट ईटि--

ननु अत्र "सेट ईटि" इत्येवास्तु न्यासः सेटस्सस्य लोपो भवतीटि परे इति च तदर्थः। एवञ्च सेटस्सस्य लोपविधानेन आतीदित्यादिसिद्धौ तदर्थमारब्धम् "सिज्लोप एकादेशे सिद्धो वाच्यः" इति वार्तिकन्न कर्त्तव्यम्भवतीति लाघवात् इति चेन्न? तथा सति और्णुवीदित्यत्र गुणापत्तेः। राद्धान्ते तु एकादेशस्य स्थानिवत्त्वेन इटा व्यवधानान्न दोष इति व्याख्यानात्। वार्तिके एकग्रहणमकृत्वा "सिज्लोप आदेशे सिद्धो वाच्यः" इति तु न वक्तुं शक्यते। तथा सति अवात्तामित्यत्र सिज्लोपस्यासिद्धत्वाभावात् "सस्यार्धधातुके" इति तत्त्वानापत्तेरिति दिक्।

## इजादेश्च गुरुमत इति—

ननु अत्र गुर्वादेर्ऋच्छतिभिन्नद्धातोराम् स्याल्लिटीत्यर्थक "गुर्वादेरनृच्छः" इति न्यास एव लाघवादस्तु किमिजादिग्रहणघटितेन गुरुभूतेन। नच तथासति अपलूव्यासौ इति धातोर्लिटि गुर्वादित्वेनामापत्तिः राद्धन्ते तु अनिजादित्वान्न भवतीति वाच्यम्? आसाञ्चक्रे इत्यादौ आस्धातोर्लिटि "दयायासश्च" इति आस्धातोराम् विधानसामर्थ्यात् आकारादेश्चेद्धातोराम् तर्हि आस एवेति ज्ञापनेन क्षतिविरहात्। नच नियमस्य विशेषापेक्षत्वेन आपदेशिकगुर्वादेश्चेदास एवेति नियमापत्तौ आत इत्यादावपि आमापत्तिरिति वाच्यम्? असति बाधके प्रमाणानां सामान्ये पक्षपातन्यायेन लाघवात् सामान्यापेक्षस्यैव ज्ञाप्यत्वात्।

**केचित्तु**—"इचो गुरोरनृच्छः" इत्येव सूत्रमास्ताम् अनृच्छ इति पर्युदासादर्थान्तरासम्भवाच्च गुरुमतोऽर्थस्य लाभसम्भवात्। एवम् मुख्यैजादिग्रहणाय आदिग्रहणन्न तु व्यपदेशादलभ्यस्येति वदन्तः ईड् स्तौ इति धातोः अयाञ्चक्रे इत्यादेरसिद्ध्यापत्तेरित्यलम्।

## णलुत्तमो वेति—

ननु "अत उपधायाः" इत्यस्याग्रे "उत्तमो वा" इत्येव पठ्यताम् पूर्वसूत्राच्च ञ्णितोरनुवृत्त्या उत्तमे ञ्णिति वा वृद्धिरित्यर्थेन च जगाद जगदेत्यादिसिद्धेर्निर्बाधत्वादिति किं णित्वविधानेन । अत्रोच्यते–पूर्वसूत्रादत्र नवीने न्यासे अत इत्यनुवर्त्तते नवा ? अनुवर्त्तते चेत् लुलाव लुलवेत्यादीनामसिद्ध्यापत्तिः, उपधाभूताकाराभावादेतत्सूत्रविषयाभावेन "अचो ञ्णिति" इति नित्यवृद्ध्यापत्तेः । नच वृद्धेः परत्वाद् "सार्वधातुकार्द्धधातुकयोः" इति गुणेऽवादेशे च "उत्तमो वा" इत्यस्य विषयतया विकल्पवृद्धिरेव नतु नित्यवृद्धिरिति वाच्यम् ? तथा सति 'वार्णादाङ्गं बलीयः" इति परिभाषयाऽवादेशापेक्षया "अचो ञ्णिति" वृद्धेर्बलवत्त्वबोधनेन सत्यपि गुणेऽवादेशं बाधित्वा नित्यवृद्धौ रूपद्वयासिद्धेस्तादवस्थ्यात् । यद्यत्र अनुवर्त्तते अत इति तदा चुकुट चुकोट इत्यत्रापि वृद्ध्यापत्तेः पाणिनीयन्यासस्यैवौचित्यात् ।

**केचित्तु** "अचो ञ्णिति, णलुत्तमो वा" इति सूत्रद्वयं विहाय "अत उपधायाः" इत्यत्रैव "ञ्णिति" इति प्रपठ्य "गोतो णित्" इत्यत्र च "ओतो वृद्धिः" इति विन्यस्य "सख्युरसम्बुद्धौ इत्यनेनापि वृद्धिविधानस्यैव स्वीकारेण लुलाव इत्यादौ गुणोत्तरं वृद्धिविकल्पेन सिद्धेरिति वदन्ति तन्न ? भूशब्दात् णिचि इष्टवद्भावे "प्रकृत्यैकाच्" इति प्रकृतिभावे "अचो ञ्णिति" इति वृद्ध्या भावयतीत्यस्य प्रियशब्दाण्णिचि प्रियस्य "प्रियस्थिर" इति प्रादेशे प्रकृतिभावे वृद्धौ पुकि प्रापयतीत्यस्य च सिद्धये "अचो ञ्णिति" इत्यस्यावश्यकत्वेन चुकोट इत्यादौ नित्यवृद्धेर्वारणाय च तथा न्यासे दोषबाहुल्यादिति ।

## वदव्रजहलन्तस्याच इति—

ननु अत्र वदव्रज्योरङ्गस्य च कस्यचिदचो वृद्धिः परस्मैपदे परे सिचीत्यर्थकः "वदव्रजोरचः" इत्येव न्यासोऽस्तु । वैकल्पिकवृद्धिविधायक "अतो हलादेर्लघोः" इति सूत्रं बाधितुं वदव्रजोर्ग्रहणम् । एवञ्च अवादीत् अगोप्सीत् इत्यादिसिद्धौ न कोऽपि दोष इति । नच तथा सति अत्र "अङ्गस्य" इत्यस्याधिकारस्तच्च विशेष्यीकृत्य अच इत्यस्य च विशेषणत्वेन तदन्तत्वे अजन्ताङ्गस्य वृद्धिः परस्मैपदे सिचि पर इत्यर्थापत्त्या कथमगोप्सीदित्यादौ वृद्धिसिद्धिरिति वाच्यम् ? तथात्वे "सिचि वृद्धिः परस्मैपदेषु" इत्यस्य वैयर्थ्यापत्तेर्वैयधिकरण्येन अङ्गावयवस्याचो वृद्धिरित्येवा-

र्थात् । अकारान्ते अजिहीर्षीत् इत्यादौ परत्वादतो लोपेन बाधात् अवासीदित्यादौ फलाभावाच्च वृद्धेर्वारयितुं शक्यत्वात् इति चेन्न ? रञ्ज राग इति धातोः अराङ्क्षीदित्यत्र वृद्ध्यनापत्तेः । राद्धान्ते हल्ग्रहणसत्त्वे "वर्णग्रहणे जातिग्रहणम्" इति न्यायेन अनेकहल्व्यवधानेऽपि हलन्तत्वेन वृद्धिरिदानीं केन स्यात् ? इति यथापाणिनीयस्यैव रमणीयत्वात् ।

**परेतु** अपिपठिषीत् इत्यत्र सन्नन्ते वृद्धिरेव दोष इति हलन्तग्रहणं कार्यमिति प्रवदन्ति ।

## ऋतेरीयङिति—

ननु अत्र "ऋतेङ्यः" इत्येवास्तु प्रत्ययस्तथाच "अकृत्सार्वधातुकयोर्दीर्घः" इति दीर्घेणैव ऋतीयते इत्यादिसिद्धेरिति चेन्न ? शेखरकारादिमते ऋति इतीकारान्तो न धातुः किन्तु तान्त "इक्श्तिपौ" इतीक्प्रत्ययान्तो निर्दिष्ट एवञ्च ईयङमन्तरा निर्वाहाभावात् । अत एव "वञ्चिलुञ्च्यृतश्च" इत्यत्र तान्तनिर्देश एवेति ।

**अपरे** तु "वञ्चिलुञ्च्यृतश्च" इति निर्देश एकादेशानुकरणेन "प्राग्दीव्यत" इत्यादिवत् । एवञ्च ऋतेरिकारान्तत्वे न सन्देहोऽपितु ईयङि सवर्णदीर्घस्य "एरनेकाच" इति यणश्च सह प्राप्तौ "वर्णादाङ्ग" न्यायेन दीर्घम्प्रबाध्य यणि ऋत्यते इत्येवमिष्यते रूपम् । यङि ङ्ये वा ऋतीयते इत्यनिष्टापत्तिरिति यथापाणिनीयमेव रम्यमिति भणन्ति ।

**परेतु** "च्छ्वोः" इति सतुग्निर्देशेन "वार्ण" परिभाषाया अनित्यत्वेन ऋतीयते इत्येवेष्यते नतु ऋत्यते इति वदन्ति ।

## अर्त्तिह्रीव्लीरीति—

ननु अत्र "अर्त्तिह्रीव्लीरीक्नूयीक्ष्माय्यादृभ्यो णेः पुट्" इत्येवं न्यास एवास्तु । एभ्यः परस्य णेः पुडागम इति च तदर्थः। एवञ्च अर्पयतीत्यादौ "सार्वधातुकार्द्ध" इति गुणेन सिद्ध्या "पुगन्तलघूपधस्य" इत्यत्र पुगन्तग्रहणन्न कर्त्तव्यम्भवति । प्रणिदापयतीत्यादौ च "यदागम" न्यायमन्तरेणापि सिद्धिसम्भवादिति चेन्न ? प्रणिदापक इत्यादौ पुड्विशिष्टे यदागमपरिभाषया णित्वमादाय "णेरनिटि" इति णिलोपापत्तेः ।

नच "निर्दिश्यमानस्यादेशा भवन्ति" इति परिभाषया "णेरनिटि" इत्यनेन तादृशस्य णेर्लोपकरणे सामर्थ्यवैकल्यादेव निर्वाह इति वाच्यम् ? तथा सति अदीदप-

दित्यादौ "णौ चङि" इति ह्रस्वानापत्तेः प्रकृतेषु वलादित्वमादाय "आर्द्धधातुकस्येड्वलादेः" इतीडागमापत्तेर्दुर्वारत्वात्। नच तथापि "अर्त्तिह्रीव्लीरीक्नूयीक्ष्माय्यातां पुक् णौ" इति विन्यस्य विकरण एव पुप् विधीयते इति न प्रागुक्तदोषद्वयापत्तिरिति वाच्यम्? तस्य पुपो धात्वधिकारीयत्वे आर्धधातुकत्वेन निरुक्तेडापत्तेर्दुर्वारता, अधात्वधिकारीयत्वे ह्रेपयतीत्यादौ गुणानापत्तेर्दुर्वारतेति व्याख्यानात्। नच ह्रेपयतीत्यादौ गुणार्थम् "पि सार्वधातुकार्धधातुकयोः" इति न्यस्य पकारे सार्वधातुकार्द्धधातुकयोश्चेगन्ताङ्गस्य गुण इत्यर्थेनेष्टसिद्धिरिति वाच्यम्? ह्रीधातोः कर्त्तरि क्विपि ह्रीस्तस्माद् धात्वर्थे णिचि पुकि ह्रीपयतीत्यत्रापि गुणापत्तेः। राद्धान्ते तु धातोर्विहितत्वाभावेनानार्धधातुकत्वाद् गुणवारणमिति व्याख्यानात्। इत्येवमादयो न्यासा दूष्या एव।

## ओःपुयणिति—

ननु अत्र "पुयण्ज्यपरे" इत्येवास्तु न्यासः अवर्णपरकपवर्गादिपरकाभ्यासावयवाकारस्य पिपक्षति यियक्षतीत्यादौ इत्वस्येष्टतया, तादृशोर्ॡकारऋकारयोश्चासम्भवात् एकारैकारादिधातुषु "आदेच उपदेशे" इत्यात्वेनाकारस्यैव लाभे "सन्यतः" इतीत्वस्येष्टत्वात् परिशेषादुकार एव लब्धस्स्यादिति किमर्थमोर्ग्रहणम्। नच वावचिषते इत्यादौ वचेर्यङन्तात् सनि यङ्निमित्ताभ्यासावयवाकारस्यान्तरङ्गतया "दीर्घोऽकितः" इति दीर्घे पश्चादित्वापत्तिरेतेन स्यादिति वाच्यम्? प्रत्यासत्तिन्यायेन सनि परे सन्निमित्तकाभ्यासावयवाकारस्यैवेत्वमिति कल्पनेन दोषविरहात्। **इति चेदत्रोच्यते**—तथा व्यर्थीभूय ओर्ग्रहणेन द्विर्वचननिमित्ताङ्गाभ्यासावयवस्य द्विर्वचननिमित्तकं कार्यं तन्निमित्तकाभ्यासस्यैव भवतीति ज्ञापनात्। अत एव यङन्ताद्गमेस्सनि जङ्गमिषते इत्यादि सिध्यति।

**परे तु** प्रत्यासत्तिन्यायेनैव सन्निमित्तकद्वित्वनिमित्ताभ्यासावयवस्येत्यर्थेनैव निर्वाहसम्भवे ओर्ग्रहणन्त्याज्यमेव सर्वथेति वदन्ति।

## इको झल् इति—

ननु "इको झल्" हलन्ताच्च" इति द्वयमपि सूत्रम्परित्यज्य "इग्वतो झल्" इति लघुना इग्वन्तन्धातुमुच्चार्य विहितो झलादिः सन् किदित्यर्थकेन च सर्वेष्टसिद्धेर्गुरुभूतः पाणिनेः प्रयासो निरर्थक इति। नचैवमर्थे धिप्सतीत्यादौ सन इग्वतो विहितत्वाभावेन गुणापत्तिरिति वाच्यम्? अस्तु तथा सति विहितविशेषणत्वानङ्गी-

कारात्। नच तथात्वे यियक्षतीत्यत्र कित्त्वेन सम्प्रसारणापत्तिरिति वाच्यम् ? सम्प्रसारणविधायकस्य "वचि स्वपि" इत्यस्य वच्यादिभ्यो विहिते किति इत्यर्थस्य भाष्यसम्मतत्वेन अत्र कितस्तदविहितत्वेन तथैव तत्र सम्प्रसारणाभावसम्पादनात्। नच "लिङ्सिचावात्मनेपदेषु" इत्यत्रानुवृत्त्यर्थम्प्रकृतसूत्रद्वयम् अत एव इक्समीपाद्धलः परौ इत्येवन्तदर्थं इति राद्धान्तः। अधुना "इग्वत" इति न्यासे इग्वत इत्यस्यैवानुवृत्त्यापत्तौ नेषीष्ट इत्यादौ लिङादेः कित्त्वेन गुणनिषेधापत्तिरिति वाच्यम्? तन्मात्रप्रयोजनकत्वे "हलः लिङ् सिचावात्मनेपदेषु" इति न्यासमुपादाय हलः परस्य झलादिलिङः कित्त्वमित्यर्थेन दोषवारणस्य सम्भवात्।

नच तथा सति अयष्ट इत्यादावपि कित्त्वेन सम्प्रसारणापत्तिः ? तथा सति "हलः लिङ्" इति सूत्रे इग्वत इत्यस्यापि सम्बन्धेन हलन्तादित्यर्थस्वीकारेण तत्र इग्वत्त्वस्याभावेनादोषात्। अतः परतरं शास्त्रार्थो द्रष्टव्यः पाणिनितन्त्रक्रोडपत्रे।

## अचो यदिति—

ननु अत्र "यत्" इत्येवास्तु न्यासः हलन्तेभ्यो "ऋहलोर्ण्यत्" इति ण्यतो निश्चयात् परिशेषादेव अजन्तेभ्यो यत् स्यादित्यर्थलाभात्। इति चेदत्रोच्यते—भाष्यकृता निरुक्तप्रकारेण अज्ग्रहणस्य वैयर्थ्यमुपपाद्य "इदन्तर्हि प्रयोजनमजन्तभूतपूर्वादपि यथा स्यादि" ति प्रोक्तम्। तथा च भूतपूर्वाजन्तादपि यत्सम्पत्तयेऽज्ग्रहणस्यावश्यकत्वात्। एवम् "यत्तव्यत्तव्यानीयरः" इति पाठेनैव सिद्धौ पृथक् "यत्" इति सूत्रमपि न कार्यमित्यादिकं तत्त्वबोधिन्यां विशेषतश्च मदीयपितृचरणकृतकौमुदीकल्पलतिकायाम् अशोच्यान् इति प्रयोगविचारकाले मयैव टिप्पण्यां शास्त्रार्थरूपेण विशदीकृतमिति ततोऽवगन्तव्यं सुधीजनैरिति।

## इको ह्रस्वोऽङ्यो गालवस्येति—

अत्र सूत्रे "अलुगुत्तरपदे" इत्यत उत्तरपदे इति अनुवर्त्तते। ततश्च पूर्वपदस्याक्षेपः यत्तदोरिवोत्तरपूर्वयोर्नित्यसाकाङ्क्षत्वात्। पूर्वपदञ्च विशेष्यीकृत्य इकः इत्यत्र तदन्तत्वम्। अङ्य इति च "प्रत्ययग्रहणे यस्मात् स विहितस्तदादेस्तदन्तस्य ग्रहणम्" इत्यनया परिभाषया तदन्तपरम्। तथा च ङ्यन्तभिन्नस्य इगन्तस्य पूर्वपदस्य ह्रस्वस्स्यादुत्तरपदे इति सम्पूर्णसूत्रस्यार्थः। ग्रामणिपुत्र इत्यादिकमुदाहरणम्।

ननु अत्र अङ्य इत्यस्य पर्युदासत्वेन ङ्यन्तभिन्नस्य ङ्यन्तसदृशस्य इगन्त-

स्येत्यर्थेनैव सकलेष्टसिद्धौ इग्ग्रहणाघटित एव "ह्रस्वोऽङ्योगालवस्य" इति न्यास आस्ताम् । नच तदभावे "अचश्च" इत्युपस्थितस्याच इत्यस्यैव सादृश्यानुयोगित्वं स्वीकृत्य ङ्यन्तभिन्नाजन्तस्य ह्रस्व इत्याद्यर्थोपत्तौ रमापतिरित्यादावपि तदापत्तिरिति वाच्यम् ? सति सम्भवे व्याप्यधर्मपुरस्कारेणैव सादृश्यं वाच्यमिति सिद्धान्तेन राद्धान्ते उपस्थितस्य अच इत्यस्य विशेषणतयाऽज्रूपस्येक इतिवत् इदानीमपि लाघवेन इगन्तत्वेन सादृश्यम्प्रतिगृह्य इग्रूपाजन्तपूर्वपदस्येत्याद्यर्थेन दोषवारणात् ।

नच तथा सति तद्व्याप्यधर्मस्य ईकारान्तत्वादेरपि सम्भवेन तेन सादृश्यग्रहणे ईकारान्तस्यैव ह्रस्वविधानापत्तौ वधूपतिरित्यादाविष्टोऽपि ह्रस्वो न स्यादिति वाच्यम् ? तथा सति ऊकारान्ते ह्रस्वाप्राप्त्या भ्रूभङ्ग इत्यादौ ह्रस्ववारणाय "इयङुवङ्भाविनामव्ययानाञ्च नेति वक्तव्यम्" इति वार्त्तिके उवङ्ग्रहणवैयर्थ्यापत्त्या तथा सादृश्यग्रहस्य दुष्टत्वसिद्धान्तात् ।

**परेतु** लाघवादत्रेगन्तत्वेनसादृश्यग्रह एवेति कुत्रापि दोषाभावेन सूत्रे इग्ग्रहणन्त्याज्यमेवेति वदन्ति ।

## वर्णात्कारः—

ननु "अइउण्" इत्यादिसूत्रीयेभ्यो अ इत्यादिवर्णेभ्यः "वर्णात्कारः" इत्यनेन कारप्रत्ययः कुतो न भवतीत्याशङ्क्य अत्र वार्त्तिके "रोगाख्यायां ण्वुल् बहुलम्" इति सूत्राद् बहुलग्रहणमनुवर्त्त्य बाहुलकात् क्वचित्तदप्रवृत्तेरिति **नागेशाः** ।

तत्र वर्णात्कार इति श्रुत्वा वर्णशब्दाद् वर्णबोधकशब्दाद् वा कारप्रत्ययः ? आद्ये "स्वंरूपम्" इति शास्त्रबलेन वर्ण इत्याकारकानुपूर्व्यवच्छिन्नादपि कारप्रत्ययापत्तिः अकारादौ तदनापत्तिश्च । द्वितीये वर्णबोधकप्रमेयादिशब्दादपि कारप्रत्ययापत्तिः । नच लोके वर्णशब्देन प्रसिद्धो यस्तस्मादित्यर्थः ? उच्चारणार्थकाकारादिविशिष्टेभ्यस्तदनापत्तेः । नच वर्णत्वं वर्णसमाम्नायपठितवर्णवृत्तिजातिमत्त्वं तदवच्छिन्नात्कारप्रत्यय इत्यर्थन न कुत्रापि दोष इति वाच्यम् ? तथा सति पटादिशब्दावयवीभूतप्रत्येकस्माद् वर्णात् कारप्रत्ययापत्तेः ।

नच वर्णमात्रबोधकात् इत्यर्थः ? तथापि वर्णशब्दात्तदापत्तेर्दत्तायाश्शुभावसरात् । नच वर्णत्वव्याप्यधर्मावच्छिन्नविषयताप्रयोजकात् इत्यर्थः ? तथा सति स्वस्मिन् स्वव्याप्यत्वाभावसिद्धान्तेन वर्णशब्दात्तदापत्तिवारणेऽपि अनुस्वारविसर्गादिशब्देभ्यस्तदापत्तेर्दुर्वारत्वात् । नच वर्णत्वविशिष्टधर्मावच्छिन्नविषयताकबोधज-

नकात् कारप्रत्यय इत्यर्थः वै० च स्वव्याप्यत्वस्वभिन्नत्वसम्बन्धाभ्याम् । इति न वर्णप्रमेयादिशब्देभ्यो ङीबादिभ्यश्च कारप्रत्ययापत्तिरिति वाच्यम् ? एवमपि इग्य-णादिशब्देभ्यस्तदापत्तेः । इति चेदत्रोच्यते—वर्णत्वव्याप्यजातिविशिष्टात् कार-प्रत्ययः । वै० च स्वावच्छिन्नविषयताकबोधतात्पर्येणोच्चरितत्वस्वविशिष्टशक्ति-पर्याप्त्यधिकरणत्वसम्बन्धाभ्याम् । सम्बन्धघटक वै० च स्वावच्छिन्ननिरूपितत्व-स्वेतरधर्मावच्छिन्नानिरूपितत्वोभयसम्बन्धेन ।

**अपरेतु**—वर्णत्वव्याप्यधर्मविशिष्टात् कारप्रत्ययः वै० च स्वावच्छिन्नविषय-ताकबोधतात्पर्येणोच्चरितत्व—स्वेतरोच्चारणार्थकाजितरवर्णाघटितत्वोभयसम्बन्धेन । न च तथार्थे वर्णसमुदायात् अनकारं विशेषयिष्याम इत्यत्र भाष्ये कारप्रत्ययानु-पपत्तिः ? "उच्चैस्तरां वषट्कारः" इति निर्देशेन बाहुलकात् तत्सिद्धेः । एवकारा-दयस्तु तथैव घञन्तकारशब्दान्तत्वात् समाधेयाः ।

**वस्तुतस्तु** वर्णविशिष्टात् कारप्रत्ययो भवति वै० स्वावयवकत्व–स्ववृत्तिश्रा-वणप्रत्यक्षविषयतावच्छेदकवर्णत्वव्याप्यजात्यवच्छिन्नबोधकत्वेन तात्पर्यविषयत्व—स्वविशिष्टाघटितत्वैतत्त्रितयसम्बन्धेन । अत्र वै० स्वेतरत्व—स्वसमभिव्याहृ-ताकारेतरत्वोभयसम्बन्धेन । तथाच न कुत्रापि दोषइति महामहोपाध्यायाः ।

**अस्मत्तातचरणास्तु**—"वर्णात् कारः" इत्यस्य स्थाने "आदेः कारः" इति विन्यस्य सर्वादिगणवत् आदिरिति गणः "अइउण्" सूत्राकारात् "हल्" सूत्र-पर्यन्तं निविश्यते । तथा च अकारः आकारः ईकार इत्यादिसिद्धिः । आम्नायसूत्रे च बाहुल्कादेव समाधेयमिति विचित्रन्यासेनैव सर्वक्लेशपरिहारे न परिष्कारादि-कमपेक्ष्यते इति भणन्ति ।

इति जौनपुर मण्डलान्तर्गतोदयपुरगेल्हवा–बदलापुराभिजन–परिष्कार-
दर्पण–वैयाकरणभूषण–शक्तिवादशास्त्रार्थकलाप्रभृतिविंशत्यधिक-
ग्रन्थ–प्रणेतृजगत्प्रसिद्धशास्त्रार्थि–पण्डितराजशुक्लश्रीवेणीमा-
धवशास्त्रिणामात्मजेन श्रीराजनारायणशुक्लशास्त्रिणा
शब्दतर्कोभयाभिज्ञेन विरचिता पाणिनीयसूत्रन्या-
सशास्त्रार्थभूता न्यासकल्पलता समाप्ता ।

**विदधातु शिवं हरिः ।**

